


**NOW** with the added fun of SPUTNIK Junior!




Selections from Sputnik Junior!.

* Colourfully illustrated stories and cartoons.
* Superb science fiction
* Entertainment and general knowledge

64 packed pages!
At just Rs. 5/-




To subscribe write to,
JUNIOR QUEST,
Dolton Agencies,
Chandamama Buildings,
N.S.K. Salai, Vadapalani,
Madras: 600 026.

A Chandamama
Vijaya Combines
publication



MAGGI CLUBBERS MAGGI CLUB FUN LOVERS

लॉज़ ऑफ़ दि जंगल गेम

स्नैप सफ़ारी गेम

# मैगी क्लब: आओ मनाएं जंगल में मंगल!

## अपने उपहार मुफ़्त लो!

मैगी नूडल्स के 5 खाली रैपरों के आगे वाले हिस्से से यह चिन्ह (MAGGI) काटो और अपनी पसंद के मुफ़्त उपहार पाने के लिए हमें भेज दो. 6 से 8 हफ़्तों में तुम्हें मैगी क्लब की ओर से एक रोचक व आकर्षक उपहार मिल जाएगा.

यह मत भूलो :

अगर तुम मैगी क्लब के सदस्य नहीं हो तो हमें लिखते समय अपने मनचाहे उपहार के नाम के साथ अपना नाम और पता ज़रूर लिखना. और यदि तुम पहले से मैगी क्लब के सदस्य हो तो अपना मेम्बरशिप नम्बर भी साथ भेजना.



डिज़्नी टुडे कॉमिक


फ़ॉरेस्ट फ़ेसिज़ कैप और मास्क


जंगल स्टैन्डीज़ सेट

MAGGI 2-minute noodles

हमारा पता है : दि मैगी क्लब
पी.ओ. नं. : 5788, नई दिल्ली-110055

और यही नहीं : अगर तुमने अभी तक 'ट्रैवल इंडिया गेम' नहीं लिया है तो आज ही लो!

HTA 6679 HIN

जिज्ञासा –

# 'नाम' शब्दः

आचार्यः- भवान् चन्दमामां पठति खलु प्रतिमासम्?

शिष्यः- अथ किम्?

आ - कथायाः आरम्भे काचित् वाक्यरचना भवति। तां रचनां लक्षितवान् वा भवान्?

शि - 'पूर्वं कस्मिंश्चित् ग्रामे गोविन्दो नाम कृषिकः आसीत्' इत्येवंरूपेण भवति खलु?

आ - आम्। एतादृशेषु वाक्येषु 'नाम' इति शब्दः प्रयुज्यते खलु? तेन शब्देन युक्तानि कानिचन वाक्यानि श्रावयामि अहम्। तेषु किं शुद्धं, किम् अशुद्धम् इति वदतु तावत्–

(१) गोविन्दो नाम कृषिकः आसीत्।
(२) गोविन्दनामा कृषिकः आसीत्।
(३) गोविन्दनामकः कृषिकः आसीत्।
(४) गोविन्दः इति नामकः कृषिकः आसीत्।
(५) गोविन्दः इति नाम कृषिकः आसीत्।

शि - सर्वाणि वाक्यानि शुद्धानि इति भासते खलु मम?

आ - नामशब्दस्य कः अर्थः गृहीतः भवता?

शि - अभिधानं, नामधेयम् (Name) इति अर्थः गृहीतः।

आ - प्रथमे वाक्ये स च अर्थः सङ्गच्छते वा परिशीलयतु।

शि - न खलु? नामशब्दस्य अन्यः अर्थः अस्ति वा?

आ - अन्यः अर्थः अस्ति वा इति न, अन्ये अर्थाः सन्ति वा इति पृच्छतु। यतः नामशब्दस्य बहवः अर्थाः सन्ति।

शि - अस्मिन् वाक्ये कः अर्थः वक्तव्यः – नामशब्दस्य?

आ - अत्र नामशब्दः प्रसिद्धार्थकः।

शि - गोविन्दः प्रसिद्धः कृषिकः आसीत् इति तस्य वाक्यस्य तात्पर्यम्?

आ - आम्।

शि - कदाचित् कश्चित् प्रसिद्धः न भवति। तदा वाक्ये नामशब्दः प्रयोक्तुं न शक्यः?

आ - भोः, अत्र प्रसिद्धः इत्यस्य 'कीर्तिसहितं सर्वैः ज्ञातः' इति अर्थः न अभिप्रेतः। 'तेन रूपेण सर्वैः ज्ञातः' इति एतावान् एव अर्थः अभिप्रेतः। अतः कश्चित् कीर्तिमान् भवतु वा मा वा, तेन अभिधानेन ज्ञातः तु भवति एव। अतः सर्वत्र नामशब्दः प्रयोक्तुं शक्यः।

शि - किम् अत्र प्रमाणम्?

आ - प्राचीनाः प्रयोगाः एव। अप्रसिद्धायाम् अपि व्यक्तौ, नामशब्दः प्रयुज्यते एव वाक्ये। हितोपदेशस्य कानिचन वाक्यानि परिशीलयतु तावत्—

* अस्ति कल्याणकटकवास्तव्यो भैरवो नाम व्याधः।

— मित्रलाभः, कथा-६

* अस्ति हस्तिनापुरे विलासो नाम रजकः।

— विग्रहः, कथा-२

* अस्ति यौवनश्रीनगरे मन्दमतिर्नाम रथकारः।

— विग्रहः, कथा-६

* अस्ति विक्रमपुरे समुद्रदत्तो नाम वणिक्।

— सन्धिः, कथा-३

शि - द्वितीयवाक्ये नामशब्दस्य अभिधानम् (Name) इत्येव अर्थः खलु? बहुव्रीहिसमासः तत्र। गोविन्दः इति नाम यस्य सः इति विग्रहः।

आ - नकारान्तपुल्लिङ्गः अयं शब्दः। तृतीये वाक्ये अपि नाम शब्दस्य अभिधानम् इत्येव अर्थः। समासान्तप्रत्ययः (ककारः) युक्तः अस्ति तत्र। चतुर्थे नामकशब्दः, पञ्चमे नामशब्दश्च अनपेक्षितौ। चतुर्थे समासान्तः कप्रत्ययः अपि दुर्लभः एव, समासाभावात्।

शि - व्यस्तः प्रयोगः अयं इति वक्तुं न शक्यते वा?

आ - कथम् अन्वयं वदति भोः भवान्? व्यस्तः प्रयोगः अभिप्रेतः चेत् 'गोविन्दः इति नाम यस्य सः, तादृशः कृषिकः आसीत्' इति विस्तरेण वक्तव्यम्।

# दीपः न ज्वलति

| | | |
|---|---|---|
| माता - | गणेश, एषः दीपः न ज्वलति। किञ्चित् पश्यतु भोः। | Ganesh, this light does not burn. Please see what is wrong. |
| पुत्रः - | कः दीपः? पाकशालास्थः वा? | Which light? One in the kitchen? |
| मा - | आम्। किम् अभवत् इति आगत्य पश्यतु तावत्। | Yes, come and see what has happened. |
| पु - | विद्युद्गोलकं भ्रष्टं स्यात्। | The bulb might have been burnt. |
| मा - | न, तत् परीक्षितं मया। तत् सम्यक् एव अस्ति। | No, I have checked it. It is OK. |
| पु - | तर्हि तन्त्रीसम्पर्कः कुत्रापि छिन्नः स्यात्। | The filament is probably broken then. |
| मा - | अतः एव खलु वदामि– किञ्चित् परिशीलयतु इति। | Why all this guess work, I am asking you to check it up. |
| पु - | इदानीं न शक्यते अम्ब, रात्रौ श्वः वा परिशीलयिष्यामि। | I can't do it now, mother. I will see it in the night or tomorrow. |
| मा - | पर्याप्तस्य प्रकाशस्य अभावे अहं कथं वा अत्र कार्यं करोमि? | How can I work here without enough light? |
| पु - | इदानीं मम समयः नास्ति अम्ब! | I have no time now, mother. |
| मा - | तादृशं किं तत् महत् कार्यं क्रियमाणम् अस्ति? | What important work is it that you are doing? |
| पु - | मित्रात् एकं पुस्तकम् आनीतवान् अस्मि। तत् पठित्वा अद्यैव प्रत्यर्पणीयम्। | I have brought a book from a friend. I have to read and return it today itself. |
| मा - | पञ्चनिमेषात्मकं खलु कार्यम् एतत्? समाप्य पठतु तावत्। | Repairing the light is only a five minutes' job—isn't it? Finish it and then read. |
| पु - | किम् अम्ब, सर्वदा भवत्याः काऽपि पीडा भवति एव। | How is it, you always trouble me about something or the other! |

# चन्दमामा

संस्थापकः – 'चक्रपाणिः'    सञ्चालकः – 'नागिरेड्डी'


## मातुः उपासना

सद्यः एव समग्रे देशे नवरात्रोत्सवसन्दर्भे मातुः उपासना कृता। 'मातृदेवो भव' इत्ययं भारतीयसंस्कृतेः प्रथमः पाठः। मातृत्वकल्पना एव मनसि उदात्तं भावं जनयति, शरीरे रोमाञ्चं जनयति च। यथा जन्मदात्री 'मातृ'शब्देन उच्यते तथैव जन्मभूमिः, समग्रा पृथिवी, प्रेरयित्री प्रकृतिः, साध्वी गौः इत्यादयः अपि 'मातृ'शब्देन उच्यन्ते। अतः मातरि अस्माकं या निष्ठा, यश्च गौरवभावः, या च आत्मीयता अस्ति, सा एव निष्ठा, सा एव आत्मीयता स एव गौरवभावः मातृभूम्यादिषु अपि अवश्यं स्यात्। मातृभूमेः विरोधः यत्र कुत्रापि दृष्टः चेत् नास्माभिः तूष्णीं स्थातव्यम्। तथैव पृथिवीमातुः सम्पत्तिभूतेषु जलवाय्वादिषु कालुष्यं यथा न उद्भवेत् तथापि जागरूकता आश्रयणीया।

जन्मदात्री यथा मातृशब्देन उच्यते तथैव पालयित्री पोषयित्री चापि माता एव। अस्माकं पालने पोषणे आश्रयदाने च मातृभूम्याः पृथिवीमातुः च भागः न अल्पः। अतः अस्माकं पुत्रत्वं तदा एव सार्थकं भवति यदा वयं मातृभूमिविषये अपि तीव्रं चिन्तयामः।

भारतमाता जयतात्!


सम्पुटः–७    अक्टोबर्–१९९०    सञ्चिका–७

प्रतिकृतिमूल्यं रू. ३-००  *  वार्षिकं ग्राहकशुल्कं रू. ३६-००







# यः स्वादति सः सुहृत् भवति!

पाठकः, विवादकः, पीनः-क्षीणः, वामनः उच्छ्रितश्च, मित्राणि भवन्ति। सर्वेऽपि नूतनां हाज़मोला कैण्डीं भुक्त्वा। चर्परी-रसाला-स्वादभरिता। कषाया-मधुरा कैण्डी, अस्याः स्वादः अपूर्वः। आकर्षकेषु पिलो पैक-पुटकेषु प्राप्यते। सदैव नीत्वा क्रीडितुं विहतुं च शक्यते गृहे बहिर्गमने, सम्मेलने वनविहारे, विद्यालये च नूतना मधुरा कषाया हाजमोला कैण्डी स्वयमपि खादतु अन्यान् अपि खादयतु नूतनानि मित्राणि निर्मापयतु।






नवीना



कषाया-मधुरा

**Hajmola®**
**CANDY**

everest/d90/DIL/265 san

वार्ताविशेषः–

# श्रीलङ्कादेशस्य परिस्थितिः

श्रीलङ्कादेशस्य इतिहासः महावंशनामकात् ग्रन्थात् ज्ञायते। एवं हि श्रूयते– पूर्वभारतदेशीयः विजयसिंहः नाम राजा सप्तशतैः अनुयायिभिः सह नूतनानां प्रदेशानाम् अन्वेषणार्थं स्वदेशात् निर्गतः श्रीलङ्काप्रदेशं प्राप्तवान्। तत्र गिरिजनकुले जातायाः युवराज्ञ्याः परिचयः प्राप्तः तेन। तस्याः साहाय्येन तेन तत्र एकं नूतनं राज्यं स्थापितम्। गच्छता कालेन सः तां गिरिजनयुवतिं परित्यक्तवान्, दक्षिण-



भारतस्य मधुरैनगरे स्थितस्य पाण्ड्यराजस्य पुत्रीं परिणीतवान् च। विजयसिंहेन सह स्थिताः सैनिकाः अपि मधुरैनगरात् आनीताः सप्तशतं तमिळकन्यकाः परिणीतवन्तः। तेषां वंशजाः एव इदानीं श्रीलङ्कादेशे सन्ति। विजयसिंहस्य नाम्नः कारणतः एव 'सिंहलम्' इति नाम आगतम् इति विश्वस्यते। रामायणकाले एषः द्वीपः 'लङ्का'नाम्ना आहूयमानः आसीत्।

दक्षिण-तमिळनाडु-सागरतटात् २० मैलूदूरे श्रीलङ्कादेशः अस्ति। अतः तमिळनाडुदेशीयाः बहवः तमिळजनाः उद्योग-वाणिज्यादिनिमित्तं श्रीलङ्कादेशं गतवन्तः। गच्छता कालेन एते सर्वे श्रीलङ्कादेशस्य निवासिनः जाताः।

यद्यपि श्रीलङ्कादेशे विभिन्नमूलात् आगताः जनाः निवसन्ति, तथापि तमिळजनानां संस्कृतिः भिन्ना एव दृश्यते स्म। बहूनि वर्षाणि यावत् एषा भावना जागर्ति स्म यत् पूर्वोत्तरप्रान्ते जाफनाप्रदेशे तमिळजनानां विषये उचितः व्यवहारः न प्रदर्श्यते इति। श्रीलङ्कासर्वकारः मूलनिवासिनां विषये विशेषादरं प्रकटयति स्म, तमिळजनानां विषये च तेन अनादरपूर्णः व्यवहारः क्रियते स्म। एतेन तमिळजनाः उद्विग्नाः जाताः। तेषु अशान्तिः प्रवृद्धा। ते शासनविरोधिव्यवहारम् आरब्धवन्तः। तमिळजनानाम् उग्रवादिदलानि निर्मितानि अभवन्। 'तमिळजनानां निमित्तं पृथक् राज्यं स्यात्' इति तेषाम् अपेक्षा। ते सशस्त्रयुद्धार्थम् अपि सन्नद्धाः जाताः। प्रपञ्चस्थाः देशाः जाफनाविभाजनं न पुरस्कृतवन्तः। एतस्यां स्थितौ भारतेन मध्ये प्रवेशः कृतः। तमिळबहुलेषु स्थलेषु स्थानिकशासनव्यवस्था कारिता। एतेन प्रयत्नेन बहवः तमिळजनाः सन्तुष्टाः। भारतस्य शान्तिसुरक्षादलस्य पर्यवेक्षणे निर्वाचनं प्रवृत्तम्। नूतनः सर्वकारः आगतः च।

किन्तु एतावता अपि श्रीलङ्कादेशे शान्तिः स्थापिता अभवत् इति न। एल्.टि.टि.ई.नामकम् उग्रवादिदलम् इच्छति स्म यत् जाफनाप्रदेशस्य शासनं मदधीनं स्यात् इति। अतः एतेन दलेन तादृशाः निष्करुणं मारिताः, ये च एतस्य विरोधं कृतवन्तः। एतेन दलेन एतादृशं कृत्यम् इतोऽपि क्रियमाणम् एव अस्ति। एतस्य विरोधिदलस्य नायकाः स्वप्राणरक्षणार्थं भारते गुप्तरूपेण आसन्। ते अपि भारते एव एतेन दलेन निर्दयं मारिताः।

श्रीलङ्कावासिनां तमिळजनानां योगक्षेमार्थं भारतेन विशेषतः साहाय्यं क्रियमाणम् अस्ति। भारतेन सर्वेषां तमिळजनानां हितं मनसि निधाय व्यवहरणीयम् अस्ति। अतः नायकत्वस्य कामनया कैश्चित् उग्रवादिभिः क्रियमाणं सशस्त्रयुद्धं भारतं कदापि न समर्थयति। तथा समर्थनम् उचितम् अपि न।

श्रीलङ्कासर्वकारस्य, एल्.टि.टि.ई. दलस्य च अपेक्षायाः अनुसारं भारतेन शान्तिसुरक्षासैन्यं श्रीलङ्कादेशात् प्रत्यानीतम्। किन्तु एतदनन्तरम् अपि तत्र परस्परवैरं न शान्तम्। तत्र युद्धं प्रचलत् एव अस्ति। एतस्य युद्धस्य परिणामतः निरपराधिनः जनाः प्राणैः वियुज्यमानाः सन्ति।



# व्यवहारकौशलम्

काञ्चनपुरनामके ग्रामे वेङ्कटपतिः वाणिज्यवृत्त्या जीवति। वेङ्कटपतेः पुत्रः रामप्रियः। सः बाल्ये मातापितृभ्यां महत्या प्रीत्या लालितः। अतः एव प्रौढावस्थां प्राप्य अपि सः प्रौढव्यवहारं न प्रदर्शयति। किन्तु दौष्ट्यम् अपि न आचरति सः। 'व्यवहारकुशलता सर्वथा नास्ति भवतः' इति वेङ्कटपतिः सदा पुत्रं निन्दति। एवं रामप्रियः मातापित्रोः अनादरपात्रम् आसीत्।

कदाचित् वेङ्कटपतिः असमाधानेन पुत्रम् उक्तवान्– "रामप्रिय! भवान् प्रौढः जातः चेदपि व्यवहारकौशलं न प्राप्तवान्। आकारेण तु भवान् मातुलम् अनुकरोति। किन्तु गुणाः तु सर्वथा बिपरीताः। मातुलस्य लोकज्ञानं व्यवहारकौशलं च यावत् अस्ति तस्य दशमः अंशः अपि नास्ति भवतः। मादृशस्य बणिजः पुत्रत्वेन भवादृशः मूढः कथम् उत्पन्नः इत्येव आश्चर्यं मम" इति।

रामप्रियस्य मातुलस्य जगन्नाथस्य लोकज्ञानं व्यवहारकौशलं च सुप्रसिद्धम् आसीत्। किन्तु मातुलस्य गुणातिशयम् उदाहरता पित्रा पुनः पुनः निन्द्यते यत् तेन रामप्रियः नितरां खिन्नः भवति। किन्तु बचनैः किमपि अप्रकटयन् मौनं तिष्ठति सः।

पुनः कदाचित् वेङ्कटपतिः पुत्रम् उक्तवान्– "रामप्रिय! भवतः मातुलस्य ग्रामे तिन्त्रिणी शुष्कमरीचिका च न्यूनमूल्येन प्राप्यते। अतः मातुलः प्रतिवर्षं तदुभयं अत्र प्रेषयति। अस्मिन् बर्षे इतोऽपि न प्रेषितम्। तत्र कारणं किम् इति न ज्ञायते। भवान् गत्वा कारणं ज्ञात्वा आगच्छतु। मरीचिकामूल्ये बृद्धिः कदाचित् स्यात्। अतः अधिकं धनम् अपि नयतु" इति उक्त्वा धनं दत्त्वा रामप्रियं मातुलग्रामं प्रति प्रेषितवान्।

**"अनामिका"**



यदा रामप्रियेण मातुलग्रामः प्राप्तः तदा सूर्यास्तसमयः। मातुलस्य गृहस्य अन्तः दीपः ज्वालितः आसीत्। मातुलस्य पुत्री उषा दीपस्य समीपे उपविश्य पठन्ती आसीत्।

पादशब्दं श्रुत्वा द्वारे दृष्टिं प्रसारितवती उषा आगतं रामप्रियं ज्ञात्वा पुस्तकं पार्श्वे स्थापयित्वा उत्थाय– "आगच्छतु, सर्वं कुशलं वा?" इति कुशलप्रश्नैः स्वागतीकृतवती।

रामप्रियः स्वगृहस्य कुशलवार्तां निवेद्य परितः पश्यन्– "गृहे अन्यः कोऽपि न दृश्यते खलु? सर्वे कुत्र गताः?" इति पृष्टवान्।

"सर्वे ग्रामे प्रचलतः विवाहस्य निमित्तं गताः। अहम् अपि तत्र गतवती आसम्। किञ्चित् शीघ्रम् आगता, तावदेव। एतावता भवान् अपि आगतः" इति उक्तवती उषा।

उषया सज्जीकृत्य दत्तं पानीयं पिबन् आसीत् रामप्रियः। तावता काचित् मध्यवयस्का द्वारम् उद्घाट्य अन्तः आगतवती। "उषे, माता आगतवती वा?" इति पृष्टवती च।

"नैव, इतोऽपि न आगता। अल्पे एव काले प्रत्यागच्छेत्। किं कार्यम् आसीत्?" इति पृष्टवती उषा।

रामप्रियस्य उपस्थित्या किञ्चित् सङ्कोचम् अनुभवन्ती सा मध्यवयस्का क्षणकालस्य अनन्तरं– "अन्यत् किमपि न। इदानीम् अकस्मात् अतिथयः समागताः। गृहे शर्करा सर्वथा समाप्ता अस्ति" इति क्षीणेन स्वरेण उक्तवती।

"शर्करा आवश्यकी वा? अहं ददामि" इति वदन्ती उषा अन्तः गतवती।

सा मध्यवयस्का तत्र तत्र छिन्नायाः सीवितायाः च शाटिकायाः आञ्चलेन शरीरम् आच्छादयन्ती तत्रैव स्थितवती। तस्याः मुखे आतङ्कः, त्वरा, लज्जा च दृश्यते स्म।

अल्पे एव काले उषा करण्डकपरिमितां शर्कराम् आनीय– "स्वीकरोतु अम्ब" इति वदन्ती शर्करां दत्तवती।

सा मध्यवयस्का सम्भ्रमेण करण्डकं

स्वीकृत्य सन्तोषेण– "दीर्घायुष्मती भवतु भवती। भवत्याः कारणतः अद्य मम मानः रक्षितः। श्वः एव शर्करां प्रत्यर्पयिष्यामि" इति उक्त्वा ततः निर्गतवती।

एतत्सर्वं पश्यन् स्थितः रामप्रियः तस्याः मध्यवयस्कायाः निर्गमनस्य अनन्तरं– "भोः, या च साक्षात् दारिद्र्यदेवी इव दृश्यते तस्यै भवती शर्करां दत्तवती अस्ति। सा शर्करां प्रत्यर्पयेत् इति विश्वसिति वा भवती? मम तु तथा न भाति" इति उक्तवान्।

एतस्य उत्तररूपेण किमपि वक्तुम् उषा यावत् उद्युक्ता तावता पुनः द्वारशब्दः श्रुतः। अमूल्यां शाटिकां, आभरणानि च धृतवती काचित् स्थूला द्वारम् उद्घाट्य अन्तः आगत्य आसन्दे उपविष्टवती। "अये उषे, कः एषः तरुणः?" इति पृच्छन्ती उषायाः उत्तरं किमपि अशृण्वती पुनः पृष्टवती सा– "माता इतोऽपि विवाहात् न प्रत्यागतवती वा?" इति।

"इतोऽपि न प्रत्यागता। तस्याः समीपे किमपि कार्यम् आसीत् वा भवत्याः?" इति पृष्टवती उषा।

"श्वः मम आर्यपुत्रस्य सुहृदः गृहम् आगच्छन्ति इति श्रुतम्। लड्डुकम्, इतराणि मधुरभक्ष्याणि च करणीयानि इति उक्तम् अस्ति आर्यपुत्रेण। किन्तु गृहे पर्याप्ता शर्करा नास्ति। सर्वदा वयं यस्मात् आपणात् वस्तूनि आनयामः स च आपणः पिहितः अस्ति।



प्रस्थद्वयपरिमाणिकां शर्करां ददाति वा भवती?" इति पृष्टवती सा स्थूला स्त्री।

उषा उपविष्टा एव उक्तवती– "अहो, सर्वं काकतालीयम्! पश्यतु। अस्माकं गृहे अपि शर्करा समाप्ता अस्ति। श्वः आपणात् आनेतव्यम् इति माता वदति स्म" इति।

एतत् श्रुत्वा निराशा सा स्थूला स्त्री– "एवं वा? तर्हि अन्यतः कुतश्चित् लभ्येत वा इति पश्यामि" इति वदन्ती ततः निर्गतवती।

तस्याः स्थूलायाः निर्गमनस्य अनन्तरम् उषा हसन्ती रामप्रियं पृष्टवती– "एतस्याः आगमनात् पूर्वं भवता किमपि पृष्टम् आसीत्। तस्य उत्तरम् इदानीं लब्धं स्यात् खलु?" इति।

रामप्रियः तु आश्चर्येण– "भवत्याः



कथनस्य आशयः मया न गृहीतः" इति उक्तवान्।

"मम आशयम् अनन्तरं कथयिष्यामि। ततः पूर्वं मम एकः प्रश्नः। पर्वूम् आगतायै निर्धनायै महिलायै मया शर्करा दत्ता। भवान् तत्र आक्षेपं प्रकटितवान्। इदानीम् आगतायै धनिकमहिलायै मया शर्करा न दत्ता। एतद्विषये किं वदति भवान्?" इति रामप्रियं पृष्टवती उषा।

रामप्रियः उषायाः व्यवहारम् अनुचितं भावयन् उक्तवान्— "भवत्या सर्वथा अनौचित्यम् आचरितम्। भवत्या तस्यै धनिकायै शर्करा दातव्या आसीत्। श्वः प्रातः आपणस्य उद्घाटनस्य अनन्तरं सा शर्कराम् आनाय्य भवत्यै प्रत्यर्पयेत् एव। भवत्या तस्यै निर्धनायै शर्करा दत्ता खलु? सा प्रत्यागच्छेत् इत्यत्र सन्देहः मम" इति।

तदा उषा हसन्ती उक्तवती— "जनाः भवन्तं लोकव्यवहारम् अजानन्तं वदन्ति यत् तत् सत्यम् एव इति प्रमाणितम् अभवत् इदानीम्" इति।

तदा रामप्रियः अल्पेन कोपेन— "मां व्यवहारम् अजानन्तं वदति खलु भवती? मया उक्तम् अयुक्तम् इति केन आधारेण वदति? स्वपक्षं समर्थयतु तावत्" इति उक्तवान्।

उषा पुनः मन्दहासपूर्वकम् उक्तवती— "भवता उक्तं मया खण्डितं यत् तेन कोपः वा भवतः? वस्तुस्थितिः उक्ता चेत् कोपः किमर्थम्? सा मध्यवयस्का निर्धना वृद्धा स्वाभिमानिनी। कदापि कमपि किमपि न याचते। यदि स्वीकुर्यात् तर्हि प्रत्यर्पणपर्यन्तं निद्रां न प्राप्नोति। अतः एतादृशेभ्यः किमपि ऋणरूपेण दत्तं चेत् तत् साहाय्यम् एव स्यात्। अनन्तरम् आगता सा स्थूला स्त्री च दम्भाचारयुक्ता। स्वीकृतम् ऋणं प्रत्यर्पणीयम् इति कदापि न स्मरति सा। यदि वयं 'प्रत्यर्पणं कदा' इति पृच्छेम तर्हि सा 'मां किं वञ्चिकां भावयति वा' इति तर्जयति। एवम् ऋणं दत्त्वा अस्माभिः क्लेशः अनुभोक्तव्यः। अतः एव गृहे शर्करा नास्ति इति वदन्ती अहं शर्करादानं निराकृतवती" इति।

"एवं वा? गृहम् आगतयोः तयोः

पृष्ठभूमिकां न जानामि खलु अहम्? बाह्यं रूपं दृष्ट्वा यथामति चिन्तितं मया। अन्यच्च भवती इव व्यवहारकुशलः न खलु अहम्" इति उक्तवान् रामप्रियः।

"व्यवहारकौशलं कथं सिध्यति? सूक्ष्मपरिशीलनात् खलु? अतः तादृशी प्रवृत्तिः अनुसरणीया अस्माभिः। भवान् आपणिकस्य पुत्रः खलु? भवान् एव आपणे उपविष्टः इति चिन्तयतु। आपणं प्रति बहवः आगच्छन्ति। ऋणरूपेण वस्तूनि ददातु इति वदन्ति। कः कीदृशः इति पूर्वम् एव वयं ज्ञातुं न शक्नुमः। अतः तेषां व्यवहारं वचनं च सूक्ष्मं परिशील्य उचितं निर्णेतव्यं भवति। कस्मैचित् अपि ऋणं न दद्मः इति धारणा स्वीकृता चेत् वाणिज्यं दीर्घकालं यावत् न प्रचलेत्। ये पृच्छन्ति तेभ्यः सर्वेभ्यः ऋणं दत्तं चेत् हानिः अनुभोक्तव्या भवेत्। अतः सूक्ष्मचिन्तनेन उचितानुचितता निर्णेतव्या। एतादृशः व्यवहारः यथा वणिजः जीवने आवश्यकः तथैव गृहस्थस्य जीवने अपि आवश्यकः" इति उक्तवती उषा।

उषायां वचनं मनसा अङ्गीकुर्वन् हसन् पृष्टवान् रामप्रियः– "भवती सख्यं साप्तपदीनम् इति वचनं श्रुतवती वा?" इति।

एतत् श्रुत्वा आश्चर्येण– "आं श्रुतम्। पिता एतादृशानि वचनानि सदा वदन् भवति। किन्तु तस्य वचनस्य प्रकृतस्य सन्दर्भस्य च कः सम्बन्धः?" इति पृष्टवती उषा।



"आवाभ्याम् एतावत्पर्यन्तं वार्तालापः कृतः यत् तत् साप्तपदीनसमम्। अतः आवयोः सख्यं स्थिरं जातं ननु?" इति हसन् उक्तवान् रामप्रियः।

शिरः अवनमय्य कटाक्षेण रामप्रियं पश्यन्ती उषा अङ्गीकारपूर्वकं शिरः चालितवती।

"मम व्यवहारकौशलम् अधिकं नास्ति इति जानाति एव भवती। एवं तर्हि भवती एव मम सहधर्मिणी भवति चेत् कथम्? आपणव्यवहारः गृहव्यवहारः च सम्यक् निरूढः स्यात् खलु? किम् एतत् अनुमन्यते वा भवती?" इति पृष्टवान् रामप्रियः।

"एवं बुद्धिमत्तया व्यवहरन्तं भवन्तं व्यवहारकौशलरहितं न भावयामि अहं, येन

भवतः प्रस्तावं तिरस्कुर्याम्। किन्तु एतादृशे व्यवहारे ज्येष्ठाः प्रमाणम्। अतः मम पितरं प्रथमं पृच्छतु" इति उक्त्वा लज्जया प्रकोष्ठं प्रविष्टवती उषा।

पुनः अल्पे एव काले जगन्नाथः पत्न्या सह प्रत्यागतवान्। रामप्रियः स्वस्य आगमनस्य कारणं निवेदितवान्।

"अस्मिन् वर्षे मया विलम्बः कृतः इति तु सत्यम् एव। कृषिकेभ्यः तिन्त्रिण्यादीनां सङ्ग्रहणे अल्पः विलम्बः जातः। मूल्ये वृद्धिः तु नास्ति। अपेक्षितानि वस्तूनि श्वः एव प्रेषयिष्यामि। एतं विषयं पितरं वदतु" इति उक्तवान् जगन्नाथः।

"मातुल! अन्यः कश्चन वैयक्तिकः विषयः प्रष्टव्यः अस्ति मया। भवत्समीपे विद्यमानम् एकम् अमूल्यं वस्तु इच्छामि। तत् ददाति वा?" इति पृष्टवान् रामप्रियः।

"भवान् तु मम अद्वितीयः भागिनेयः। सर्वैः अचतुरः इति कथ्यमानः भवान् एवं वाक्चातुर्यं प्रदर्शयन् अस्ति इति तु सन्तोषाय एव। भवता प्रार्थ्यमानं यदि मम समीपे स्यात् तर्हि तत् अवश्यं दास्यामि। इदानीं वदतु— भवता किम् अपेक्ष्यते?" इति पृष्टवान् जगन्नाथः।

"भवतः कन्यारत्नम् इच्छामि। एतस्य दानं कृपया न निराकरणीयं भवता" इति उक्तवान् रामप्रियः।

"एवं वा? एतत् तु मम सन्तोषाय एव। तथापि उषायाः अनुमतिः पृष्टा चेत् वरं स्यात् खलु?" इति वदन् जगन्नाथः उषाम् आहूतवान्। द्वारस्य पृष्ठतः स्थित्वा सर्वं शृण्वत्याः तस्याः रागरञ्जितं मुखम् एव हृद्गतं प्रदर्शयति स्म।

गृहं प्रत्यागतेन पुत्रेण निवेदितं श्रुत्वा वेङ्कटपतिः पत्नीं साभिमानम् उक्तवान्— "पश्यतु भोः, पुत्रस्य कौशलम्। व्यवहारार्थं गतः चातुर्येण कन्याम् अपि प्राप्य आगतवान्" इति।

अनन्तरं शुभे मुहूर्ते उषा-रामप्रिययोः विवाहः सवैभवं प्रवृत्तः।





# लुप्तनामः युवराजः

## १२

(जयानन्दमुनेः आश्रमे वर्धमानं स्वस्य पुत्रं दृष्टवान् शान्तिदेवः। प्रतिदिनं वर्धमानं वीरसिंहस्य दुराचारं विरुध्य योजनाबद्धं कार्यं कुर्वतः वसन्तस्य नेतृत्वे कार्यं कुर्वतां सुमेधराज्यस्य युवकानां मेलनं सीमाप्रान्ते अरण्ये कृतं चेत् वरं स्यात् इति सूचितवान् जयानन्दमुनिः। राजा शान्तिदेवः एतं प्रस्तावम् अङ्गीकृतवान्। तदनन्तरम्......।)

अल्पेन एव प्रयासेन सिंहासनं स्वायत्तीकृतवतः वीरसिंहस्य योजनाः असफलाः जाताः। सः चिन्तयति स्म यत् प्रतिवेशिराज्यम् आक्रम्य सम्पत्तिः वशीकरणीया इति। किन्तु तथा कर्तुम् उद्युक्तस्य तस्य सेना एव नष्टा जाता। एवं तर्हि प्रजाभ्यः यावत् अधिकं शक्यते तावत् प्राप्तव्यम् इति सः चिन्तितवान्। किन्तु एतत् अपि यशस्वि न जातम्। उत्साहशालिनः केचन युवकाः एतस्मिन् प्रयत्ने निरन्तरं विघ्नम् उत्पादितवन्तः।

एवं विघ्नम् आचरतां मूलं कुत्र इति ज्ञातव्यम् इति वीरसिंहेन बहुधा प्रयत्नः कृतः। सेनापतिः कपालकण्ठः अपि अत्र प्रयत्नं कुर्वन् अस्ति। किन्तु तेन प्रयोजनं किमपि न सिद्धम्। यतः ते युवकाः अरण्ये भिन्नभिन्नेषु स्थलेषु निवसन्ति स्म। आवश्यकतायां सत्यां पूर्वनिश्चिते स्थले ते



मिलन्ति स्म। कार्यस्य समाप्तेः अनन्तरम् इतस्ततः विकीर्णाः भवन्ति स्म।

ते यत्र मिलन्ति स च कश्चन खातप्रदेशः। परितः पर्वताः सन्ति। सः प्रदेशः दूरात् खातः इव दृश्यते चेदपि विशालम् अङ्गणम् इव आसीत्। परितः पर्वताः सन्ति इत्यतः एतस्मिन् प्रदेशे यत् प्रचलति तत् अन्यैः न ज्ञायते स्म। अन्यच्च एतस्मिन् प्रदेशे काश्चन गुहाः अपि आसन्। अतः आपत् आगता चेत् एतासु निलीय स्थातुम् अपि शक्यते। पूर्वदिक्तः पश्चिमदिक्तः वा एतं प्रदेशं प्रति आगन्तुं शक्यते, न तु अन्यस्याः दिक्तः।

ये वीरसिंहं विरुध्य व्यवहरन्ति ते प्रतिसप्ताहम् अत्र व्यवस्थिततया मिलन्ति। वीरसिंहस्य व्यवहारात् खेदं प्राप्य अमृतपुर्यां शरणम् आगतानां केषाञ्चित् सेनाप्रमुखाणां द्वारा एते युद्धशिक्षणं प्राप्नुवन्तः आसन्।

एते युवकाः विभिन्नान् वेषान् धरन्तः राजधान्यां शान्तिपुरे ग्रामेषु च अटन्ति। एवम् अटनसमये परस्परपरिचिताः अपि अपरिचिताः इव व्यवहरन्ति। वीरसिंहस्य सैनिकाः यदा धान्यस्वायत्तीकरणस्य सन्नाहं कुर्वन्ति तदा एते तत् जानन्तः विशिष्टेन सङ्केतेन अन्यान् सूचयन्ति। सङ्केतद्वारा एतां वार्तां झटिति जानन् वसन्तः स्वस्य अनुयायिनः गणरूपेण प्रेषयन् वीरसिंहभटैः वशीकृतानि धान्यानि वशीकरोति स्म। अतः वीरसिंहसैनिकाः एतादृशे प्रयत्ने कदापि साफल्यं प्राप्तुं न अर्हन्ति स्म। वसन्तस्य अनुयायिनः तानि धान्यानि पुनरपि ग्रामं प्रापयन्ति स्म।

एवम् एव अष्ट वर्षाणि गतानि। प्रजानां जीवनं नरकसदृशम् आसीत्। वीरसिंहसैनिकाः कदा कस्य गृहस्य उपरि आक्रमणं कुर्वन्ति इति वक्तुं कोऽपि न शक्नोति। अतः जनानां तु सर्वदा आतङ्कः भीतिः च। प्रतिदिनं ते भगवन्तं प्रार्थयन्ति स्म— 'देव! वीरसिंहस्य सैनिकानाम् आक्रमणतः अस्मान् रक्षतु' इति।

कदाचित् वसन्तः जटाभिः युक्तः सन् संन्यासिवेषेण कपालकण्ठस्य सैन्यस्य शिबिरस्य पुरतः उपविष्टवान् आसीत्।

वसन्तस्य वेषे व्यवहारे च कृत्रिमता न दृश्यते स्म। अतः कोऽपि तं सन्देहेन न पश्यति। अन्यच्च सेनाशिबिरसमीपं कश्चित् गूढचारी आगच्छेत् इति कोऽवा तर्कयितुम् अर्हति?

रक्षणकार्ये निरतः कश्चन दलपतिः वसन्तं दृष्टवान्। तं वास्तविकं संन्यासिनं मन्यमानः सः समीपम् आगत्य विनयेन नमस्कृत्य निवेदितवान्– "महात्मन्! भवान् हस्तसामुद्रिकम् अपि जानीयात् खलु? कृपया मम हस्तं परिशीलयतु" इति।

"हस्तसामुद्रिकम् अपि जानामि अहम्। मम तत् ज्ञानं लोकोपकारार्थं, न तु प्रतिफलप्राप्त्यर्थम्" इति गाम्भीर्येण उक्तवान् वसन्तः।

"एवं तर्हि कृपया मम गृहम् आगच्छतु। तत्र मम हस्तस्य रेखाः परिशीलयतु। मदीयं भविष्यं कीदृशम् इति विस्तरेण निवेदयतु। भवतः उपाहारव्यवस्था मम गृहे एव भविष्यति" इति उक्तवान् सः दलपतिः।

"कस्मिंश्चित् अपि विषये न इति वचनं मम मुखात् न आगच्छति। अतः भवतः गृहम् आगमिष्यामि। किन्तु जलमात्रं मम आहारः। अतः आहारं कमपि न स्वीकरिष्यामि" इति उक्तवान् वसन्तः।

एतेन सह गतं चेत् रहस्यं किमपि ज्ञायेत इति वसन्तस्य आशयः। अतः सः दलपतिना सह तदीयं गृहं गतवान्। किन्तु प्रवेशसमये द्वारस्य उपरि स्थितया वक्राग्रया शलाकया



लग्ना तदीया जटा शिरस्तः विचलिता जाता। एतत् दृष्टवान् दलपतिः। सः क्रोधेन– "अये, कपटसंन्यासिन्! कः भवान्?" इति पृच्छन् कोषात् खड्गम् आकृष्टवान्।

'इतःपरम् अत्र स्थितं चेत् अपायः निश्चितः' इति निश्चित्य वसन्तः ततः पलायनम् आरब्धवान्।

"अहो! कश्चन गूढचरः .... गृह्णन्तु, गृह्णन्तु!" इति वदन् दलपतिः वसन्तम् अनुसृतवान्। अन्ये अपि द्वित्राः भटाः अनुसृत्य आगतवन्तः।

किन्तु वसन्तं ग्रहीतुं न शक्तं तैः। अत्रान्तरे कश्चन अश्वारोही तेषाम् अभिमुखं वेगेन आगतवान्। तम् अपरं दलपतिं मन्यमानः एषः दलपतिः उच्चैः



उक्तवान्– "अये! गृह्णातु तम्। पारितोषिकं प्राप्यते तेन" इति।

किन्तु अभिमुखम् आगतः सः दलपतिः न, अपि तु कश्चित् अवगुण्ठनधारी। सः वसन्तसमीपं गत्वा– "भवान् वेगेन धावन् नदीम् अतिक्रम्य तिष्ठतु। एतेषाम् अवरोधम् अहं करोमि" इति उक्त्वा "अये दलपते, तं मा स्पृशतु" इति आज्ञास्वरेण वदन् कशया वेगेन प्रहृतवान्।

कशाप्रहारकारणतः दलपतिः भूमौ पतितः। अनुसृत्य आगताः सैनिकाः दलपतिम् उन्नेतुम् उद्युक्ताः जाताः।

सः अवगुण्ठनधारी वेगेन अश्वं प्रतिनिवर्त्य विद्युद्वेगेन नद्याः तीरं प्राप्तवान्। नद्याः गभीरता अधिका न आसीत् इत्यतः तस्य अश्वः विनायासेन नदीम् अतिक्रम्य अतिष्ठत्।

अत्रान्तरे वसन्तः अपि बाहुभ्यां तरन् नद्याः अपरतीरस्य समीपम् आगतवान्। अवगुण्ठनधारी अश्वात् अवतीर्य तीरारोहणे वसन्तस्य साहाय्यं कर्तुं हस्तं प्रसारितवान्। एतदभ्यन्तरे तस्य अवगुण्ठनं किञ्चित् अपसृतम् अभवत्।

तदा वसन्तः तत्क्षणे एव तस्य अभिज्ञानं प्राप्नुवन् आनन्दाश्रूणि स्रावयन् नमस्कुर्वन् उक्तवान्– "महाराज! मम प्राणान् बहुवारं रक्षितवान् भवान् एव स्यात् इति मम सन्देहः आसीत्। अद्यापि भवता रक्षितः अहम्। सौभाग्यवशात् भवतः मुखदर्शनं प्राप्तम्। अहो मम सौभाग्यम्!" इति।

तदा राजा तं प्रीत्या उत्थापयन्– "वसन्त! भवतः धैर्यसाहसादयः कार्यनिष्ठा च श्लाघनीयाः एव। प्रजानां हितार्थं प्रयत्नं कुर्वति भवति प्रजाः अपि स्निह्यन्ति। भवता अहं दृष्टः यत् तत् अन्यत्र कुत्रापि न वक्तव्यम्। सर्वथा गोपनीयः एषः विषयः" इति उक्तवान्।

"किमर्थं गोपनीयम्? किं प्रयोजनं तेन?" इति आश्चर्येण पृष्टवान् वसन्तः।

"मम स्थितिः प्रजाभिः ज्ञाता चेत् देशे अशान्तिः वर्धते। मम ग्रहणार्थं प्रयतमानेन वीरसिंहेन क्रूरकृत्यानि क्रियन्ते। तदा प्रजानाम् एव हानिः खलु?" इति उक्तवान्

शान्तिदेवः।

"प्रभो, प्रजानां क्षेमार्थं सदा प्रयत्नं कुर्वन्तः स्थिताः मादृशाः यदि भवन्तं पश्येयुः तर्हि तेषाम् उत्साहः दशगुणितं वर्धेत। अतः तैः वा भवतः उपस्थितिः ज्ञातव्या एव। ते भवदर्थं प्राणान् अपि अर्पयितुं सिद्धाः सन्ति। धर्मपरस्य महाराजस्य परतया युद्धं कर्तुं कस्य वा तरुणस्य उत्साहः न स्यात्? अतः अहं प्रार्थयामि यत् एकवारं वा भवता अस्मत्सहकारिणां पुरतः मुखं प्रदर्शनीयम् इति। अनन्तरम् अपि भवता योग्यं मार्गदर्शनं करणीयम्। इतः परम् अपि कियत्कालम् यावत् रहस्यव्यवहारः करणीयः? कियत्कालं वीरसिंहस्य दुराचारः सोढव्यः? प्रजानां स्थितिः नितरां शोचनीया अस्ति। एषा परिस्थितिः परिवर्तनीया। सः दुष्टः सिंहासनात् अपसारणीयः" इति उद्वेगेन उक्तवान् वसन्तः।

शान्तिदेवः क्षणकालं विचिन्त्य– "भवता उक्तं युक्तम् एव। अस्मदभिमानियुवकाः सर्वे मेलनीयाः। अमृतपुर्याः सेनायाः साहाय्यम् अपि स्वीकृत्य वीरसिंहस्य दुष्टशासनं निवारणीयम्। प्रतिपदं जागरूकता आश्रयणीया" इति उक्तवान्।

स्वस्य प्रार्थनां राजा शान्तिदेवः अङ्गीकृतवान् इति ज्ञातवतः वसन्तस्य सन्तोषस्य सीमा एव नास्ति। सः महाराजं भक्त्या नमस्कृत्य सन्तोषेण नृत्यन् ततः



निर्गतवान्।

* * * *

पूर्णिमायाः मनोहरी रात्रिः। वसन्तस्य अनुचराः शताधिकाः युवकाः रहस्यकेन्द्रे खातप्रदेशे मिलिताः सन्तः महाराजस्य आगमनं प्रतीक्षमाणाः आसन्।

तावता शिलानां मध्यतः मन्दः स्वरः श्रुतः– "वसन्त!" इति। एषः कण्ठस्वरः महाराजस्य इति जानन् वसन्तः शिलानां समीपं गतवान्। राजानं दृष्ट्वा– "महाराज!" इति वदन् नमस्कृतवान्।

"वसन्त! इतः क्षणमात्रेण निर्गन्तव्यम् अस्माभिः। यतः अपायः सन्निहितः अस्ति। वयम् अत्र मिलामः इति वीरसिंहेन कथमपि



ज्ञातम्। सः सेनां प्रेषितवान् अस्ति। पूर्वदिक्तः पश्चिमदिक्तः च केवलम् एषः प्रदेशः प्रवेष्टुं शक्यः खलु? अतः उभयतः अपि सेना आगच्छन्ती अस्ति। मार्गद्वयम् अपि अवरुध्य वयं सर्वे मारणीयाः इति योजना वीरसिंहस्य। पूर्वद्वारसमीपम् आगता अस्ति शत्रुसेना। पश्चिमद्वारस्य प्राप्तौ अल्पः विलम्बः भवेत्। अहं पूर्वद्वारे तिष्ठन् ते अग्रे यथा न आगच्छेयुः तथा पश्यामि। एतदभ्यन्तरे भवद्भिः सर्वैः पश्चिमद्वारेण त्वरया निर्गन्तव्यम्। क्षणमात्रम् अपि विलम्बः न भवेत्। गच्छन्तु त्वरया'' इति आज्ञास्वरेण उक्तवान् शान्तिदेवः।

परिस्थितिः विषमतां गता अस्ति इति ज्ञातं वसन्तेन। उपायान्तरस्य चिन्तनार्थं समयः सर्वथा नास्ति। अतः सः स्वस्य अनुयायिनः पश्यन्– ''मित्राणि! भवन्तः सर्वे पश्चिमद्वारेण निर्गच्छन्तु। प्रश्नोत्तरस्य एषः न समयः। सर्वे निर्गच्छन्तु त्वरया'' इति आज्ञापितवान्।

अनन्तरक्षणे एव सर्वे युवकाः पश्चिमद्वारम् उद्दिश्य त्वरया निर्गतवन्तः। वसन्तः तु तान् अननुसरन् महाराजस्य पार्श्वे आगत्य स्थितवान्।

''भवता किमर्थं न निर्गतम्?'' इति पृष्टवान् राजा शान्तिदेवः।

''भवन्तम् एकाकिनम् अपाये पातयित्वा अहं कथं वा निर्गच्छेयम्? सर्वथा असाध्यम् एतत्। भवतः रक्षणं मम कर्तव्यम्'' इति दृढस्वरेण उक्तवान् वसन्तः।

अत्रान्तरे खातस्य पश्चिमद्वारसमीपे आगच्छन्त्याः सेनायाः शब्दः श्रुतः।

राजा खड्गम् आकृष्य द्वारस्य पुरतः स्थितवान्। वसन्तः राजानम् अनुसरन् तस्य पृष्ठतः स्थितवान्।

''एतत् एव पूर्वद्वारम्। अन्तः विद्यमानेषु एकः अपि जीवितः यथा न तिष्ठेत् तथा सर्वे मारणीयाः'' इति भटान् आज्ञापितवान् कपालकण्ठः।

कश्चन सैनिकः उत्साहेन अग्रे आगतवान्। राजा तं पादप्रहारेण पृष्ठतः पातितवान्।

राज्ञः पृष्ठतः स्थितः वसन्तः पार्श्वे आगत्य "अन्तः पदं स्थापितं चेत् यमलोकः गन्तव्यः भवेत्। जागरूकाः भवन्तु" इति कठोरस्वरेण उच्चैः गर्जितवान्।

"भवान् कः इति जानामि अहम्। अये दुष्ट, वसन्त! यमलोकं प्रति गन्ता भवान्, न तु वयम्" इति उच्चैः वदन् कपालकण्ठः अग्रे आगतवान्।

'द्वारसमीपे स्थितानां हस्ते यदि आयुधं स्यात् तर्हि आयुधप्रहारः एव कृतः स्यात्, न तु पादप्रहारः। अतः द्वारसमीपे स्थिताः निरायुधाः। एषः वसन्तः बद्धः मारितः चेत् वा वीरसिंहः पारितोषिकेण मां सत्कुर्यात्' इति चिन्तयन् सः अग्रे आगतवान्।

"अये कपालकण्ठ! तृणमात्रस्य भवतः मारणं न कष्टकरम्। प्राणाः प्रियाः यदि स्युः तर्हि प्रतिगच्छतु" इति गर्जितवान् वसन्तः। किन्तु तावता कपालकण्ठः शूलायुधं वेगेन क्षिप्तवान्। तच्च शूलायुधं वसन्तस्य पार्श्वे स्थितस्य शान्तिदेवस्य वक्षःस्थले लग्नम्। आयुधाघातेन अधः पतितवान् राजा। पतितः वसन्तः एव इति भावयन् सन्तोषेण अग्रे आगतवान् कपालकण्ठः।

"अये दुष्ट! किं कृतं भवता" इति वदन् वसन्तः एकेन एव खड्गप्रहारेण कपालकण्ठस्य कण्ठं कर्तितवान्। कपालकण्ठस्य शिरः सैनिकानां पुरतः पतितम्।



अपरक्षणे एव सैनिकानां मध्ये कोलाहलः उत्पन्नः। "हा हन्त! मृतः कपालकण्ठः! सेनापतिः मृतः!" इति वदन्तः सर्वे सैनिकाः हाहाकारं कुर्वन्तः ततः पलायितवन्तः। वसन्तः पतितं राजानम् उन्नीय ततः गतवान्।

पश्चिमद्वारतः अपि केचन सैनिकाः खातं प्रविष्टवन्तः। किन्तु तावता एव वसन्तस्य सर्वे अनुचराः ततः निर्गतवन्तः आसन्। अतः तैः सैनिकैः तत्र कोऽपि न दृष्टः। निराशाः ते येन मार्गेण आगतं तेनैव मार्गेण निर्गतवन्तः।

राजानम् उन्नीय गतः वसन्तः निर्झरिण्याः पार्श्वे स्थितायां गुहायां राजानं शाययित्वा जलं पायितवान्। शत्रुसैनिकाः सर्वे निर्गताः इति निश्चित्य समीपस्थानि तृणादीनि एकत्रीकृत्य सः अग्निं ज्वालितवान्।

वसन्तस्य अङ्के शयानः राजा मन्दस्वरेण उक्तवान्– "वसन्त! मम अन्त्यकालः सन्निहितः। इतः परं एतस्य कार्यस्य निर्वहणं भवता करणीयम्। एतावत्पर्यन्तम् अज्ञातरूपेण तिष्ठन् यथाशक्ति कार्यं कृतवान्। वीरसिंहस्य स्वभावे परिवर्तनं भवेत् इति न भाति मम। तस्य पीडातः प्रजाः मुक्ताः भवेयुः। एतदर्थं क्रियमाणे प्रयत्ने कदापि विच्छेदः न स्यात्। एषः एव अन्तिमसन्देशः मम" इति।

राज्ञः व्रणं वसन्तः वस्त्रेण बद्धवान् अस्ति। तथापि रक्तं तु निरन्तरं स्रवति एव। तस्य शक्तिः क्षीयमाणा आसीत्। कण्ठस्वरे कम्पनं दृश्यते।

"महाराज! भवान् एव न जीवति चेत् वयं कस्य निमित्तं युद्धं कुर्याम? केन हेतुना वीरसिंहस्य विरुद्धं कार्यं करणीयम्? वीरसिंहं सिंहासनात् अवतार्य कं वा तत्र उपवेशयाम? अस्माकं का वा गतिः?" इति गद्गदस्वरेण पृष्टवान् वसन्तः।

"वसन्त! आसन्नमरणस्य मम जीवितस्य आशा तु सर्वथा नास्ति। किन्तु भविष्यम् अन्धकारमयं तु न। राज्ञी मृता, सत्यं, किन्तु सा मरणसमये युवराजं सत्पात्रे निक्षिप्तवती आसीत्। मुनेः कस्यचित् मार्गदर्शने सः युवराजः सम्यक् वर्धमानः अस्ति। कालान्तरे भवता एव तस्य रक्षणं करणीयं भवेत्। भवता एव मार्गः उपदेष्टव्यः। प्रजाक्षेमचिन्तनं भवतः आद्यं कर्तव्यम्। एतम् अंशं कदापि मा विस्मरतु" इति उक्तवान् राजा।

"युवराजः वस्तुतः अपि जीवति? तर्हि वयम् उज्जीविताः। रविम् आक्रम्य स्थितं मेघं वयम् अपसारयिष्यामः। देशस्य हितार्थम् अन्तिमश्वासपर्यन्तम् अपि प्रयत्नं करिष्यामः। अस्माकम् आशाकेन्द्रं युवराजः कुत्र अस्ति? तस्य रक्षकः कः? तस्य दर्शनस्य उपायः कः?" इति पृष्टवान् वसन्तः।

शान्तिदेवः क्षीणेन स्वरेण सर्वं निवेद्य उषःकालसमये निश्चिन्ततया मरणं प्राप्तवान्।

–(अनुवर्तते)






# कीर्तिकामना

यदि त्रिविक्रमः न आगच्छेत् तर्हि मया सज्जीकृत्य स्थापिताः बह्व्यः कथाः व्यर्थाः भवेयुः इति चिन्तयन्तम् इव स्थितं वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः राजानम् उद्दिश्य अवदत्– "अये राजन्! एकस्य देशस्य राजा सन् भवान् प्राप्तया कीर्त्या तृप्तिम् अप्राप्नुवन् अपूर्वस्य कस्यचित् कार्यस्य साधनार्थम् उद्युक्तः यत् तत् तु प्रशंसार्हम् एव। किन्तु अधिकां कीर्तिं प्राप्य अपि भवान् तृप्तः भवेत् इत्यत्र मम संशयः। अत्र उदाहरणरूपेण एकां कथां श्रावयामि। मार्गायासस्य परिहारार्थं कथां श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

## वेतालकथा



पूर्वं वेङ्कटपुरनामके ग्रामे रामेशः नाम गृहस्थः निवसति स्म। अतिथिसत्कारेण सः कीर्तिं प्राप्तवान् आसीत्। अतः ग्रामीणाः सर्वे तं 'सत्कारशीलः रामेशः' इत्येव वदन्ति स्म।

रामेशस्य गृहस्य पार्श्वे तस्य दायादस्य गोपकुमारस्य गृहम् अस्ति। सः रामेशाय नितराम् असूयति। रामेशेन इव मया अपि कीर्तिः प्राप्तव्या इति गोपकुमारस्य महती इच्छा। एतदर्थं सः बहुधा प्रयत्नं कृतवान्। किन्तु तेन धनव्ययः केवलं जातः, कीर्तिः तु किञ्चिदपि न प्राप्ता।

कदाचित् कश्चन संन्यासी गोपकुमारस्य गृहम् आगतवान्। गोपकुमारः तम् आदरेण सत्कृत्य भोजनादिकं व्यवस्थाप्य स्वस्य चिन्तां निवेदितवान्।

'अन्ये प्रशंसां न कुर्वन्ति इत्येव एतस्य चिन्ता' इति ज्ञात्वा संन्यासी हसन् उक्तवान्– "कीर्त्यर्थम् अधिकं चिन्तनं न करणीयम्। भवान् यथाशक्ति जनानां साहाय्यं करोतु। तेन आत्मतृप्तिः प्राप्यते। आत्मतृप्तिः एव जीवने गरीयसी। कीर्तिकामना न उचिता" इति।

तदा संन्यासिनः कथनं निकाकुर्वन् गोपकुमारः उक्तवान्– "श्रीमन्! निष्कामकर्म मादृशाः कर्तुं न अर्हन्ति। भवादृशाः संन्यासिनः तत् कुर्युः। समाजे स्वस्य विशिष्टं स्थानं स्यात् इति सर्वे इच्छन्ति एव खलु? अहम् अपि तादृशः एव। कीर्तिः यदि न प्राप्येत तर्हि कार्यं कर्तुम् उत्साहः कथम्? मया कीर्तिकामनया सत्कार्यम् एव क्रियते खलु? यदि भवान् शिष्यवत्सलः, यदि मया क्रियमाणं सत्कार्यं स्थगितं न स्यात् इति भवान् इच्छति, तर्हि एतदर्थम् एकम् उपायं सूचयतु कृपया" इति।

तदा संन्यासी एकं मायादर्पणं सृष्ट्वा गोपकुमाराय यच्छन्– "पुरतः स्थितस्य कुरूपिणः अपि मुखम् एतस्मिन् दर्पणे सुन्दरम् एव दृश्यते। अतः सर्वे यथा पश्येयुः तथा एतं दर्पणं भवान् गृहे स्थापयतु। स्वस्य सुन्दरं रूपं दृष्ट्वा सर्वे सन्तुष्टाः भवन्ति। एतेन भवतः कीर्तिः वर्धते। तृप्तिः प्राप्यते च" इति उक्त्वा ततः निर्गतवान्।

गोपकुमारस्य गृहे स्थितस्य दर्पणस्य वार्ता सर्वत्र प्रसृता। सर्वे तस्मिन् दर्पणे स्वस्य सुन्दरं रूपं दृष्ट्वा सन्तोषेण ततः निर्गच्छन्ति स्म। एतस्य कारणतः 'दर्पणवान् गोपकुमारः' इत्येव कीर्तिः प्राप्ता गोपकुमारेण।

वेङ्कटपुरस्य भूस्वामिना अपि गोपकुमारस्य दर्पणस्य वार्ता श्रुता। 'दर्पणेन सह भवता मम गृहम् आगन्तव्यम्' इति सेवकद्वारा सूचनां प्रेषितवान् भूस्वामी। गोपकुमारः दर्पणेन सह भूस्वामिनः गृहं गतवान्।

भूस्वामी तस्मिन् दर्पणे स्वस्य मुखं दृष्ट्वा असन्तोषं प्रकटयन्– "किमिदम्? अत्र मम मुखं कुरूपयुक्तं दृश्यते खलु?" इति उक्तवान्।

अनन्तरं भूस्वामिनः परिवारजनाः अपि दर्पणे स्वस्य रूपं दृष्टवन्तः। तेषां मुखम् अपि दर्पणे कुरूपयुक्तं दृश्यते स्म।

"किमिदं भोः, मिथ्याप्रचारः भवतः? मिथ्याप्रचारेण कीर्तिं प्राप्तुम् इच्छति वा भवान्?" इति वदन् भूस्वामी कोपेन दर्पणं भूमौ पातितवान्। किन्तु आश्चर्यं नाम दर्पणः न भग्नः। गोपकुमारः दर्पणम् उन्नीय शिरः अवनमय्य ततः निर्गतवान्।

भूस्वामिनः गृहे प्रवृत्ता घटना ग्रामीणैः श्रुता। ते सर्वे आश्चर्यम् अनुभवन्तः गोपकुमारस्य गृहम् आगत्य दर्पणे स्वमुखं दृष्टवन्तः। तत्र तैः स्वमुखानि सुन्दरतया एव दृष्टानि। अतः एतत् तु निश्चितम् अभवत् यत् गोपकुमारस्य गृहे स्थितः दर्पणः सुन्दरं





प्रतिबिम्बं प्रदर्शयति। स एव दर्पणः अन्यत्र नीतः कुरूपं प्रदर्शयति इति।

एषा वार्ता भूस्वामिना श्रुता। सः गोपकुमारस्य गृहं गत्वा दृष्टवान्। तत्र तेन सुन्दरं रूपम् एव दृष्टम्।

एतत् दृष्टवतः भूस्वामिनः सन्तोषस्य सीमा एव नास्ति। भूस्वामी तस्मिन् दिने एव एकं समर्थं चित्रकारम् आनायितवान्। तद्द्वारा दर्पणे दृश्यमानं सुन्दरं रूपं चित्रितवान्। एवम् अपूर्वं चित्रं सिद्धम्। सन्तुष्टः भूस्वामी गोपकुमाराय कानिचन रूप्यकाणि दत्त्वा ततः निर्गतवान्।

सर्वेषां मुखे सौन्दर्यं कुरूपं च मिश्रितं भवति खलु? गोपकुमारस्य गृहे स्थितः दर्पणः तादृशां सौन्दर्यम् एव पृथक्कृत्य प्रदर्शयति स्म। अन्यत्र नीतः स एव दर्पणः कुरूपं पृथक्कृत्य प्रदर्शयति स्म।

भूस्वामिनम् अनुकुर्वन्तः बहवः जनाः दर्पणे दृश्यमानं स्वस्य सुन्दरं रूपं चित्रकारद्वारा चित्रे लेखयित्वा गच्छन्ति स्म। दिने दिने एवम् आगच्छतां जनानां सङ्ख्या वर्धते। न केवलं देशस्य सर्वेभ्यः कोणेभ्यः, अपि तु विदेशेभ्यः अपि जनाः आगच्छन्ति इदानीम्। एवं गोपकुमारस्य गृहं सदापि अतिथिभिः पूर्णं भवति।

प्रतिदिनं शताधिकाः अतिथयः आगच्छन्ति इत्यतः गोपकुमारः अतिथिसत्कारकार्यं परित्यक्तवान् अस्ति। तथापि आगन्तारः सन्तोषेण एव गच्छन्ति स्म। अतः गोपकुमारस्यापि खेदः नास्ति— अतिथिसत्कारत्यागविषये।

कदाचित् गोपकुमारः चिन्तितवान्— 'इदानीं मम कीर्तिः समग्रे देशे प्रसृता स्यात्। जनैः क्रियमाणा प्रशंसा मया स्वयं श्रोतव्या' इति। अतः गृहकार्यभारं पत्नीपुत्राधीनं कृत्वा सः राजधानीं प्रति प्रस्थितवान्।

गोपकुमारं वेङ्कटपुरस्थं जानन् कश्चित् अपरिचितः राजधान्यां पृष्टवान्— "भवान् वेङ्कटपुरतः आगतवान् खलु? तर्हि दर्पणवन्तं गोपकुमारं जानीयात्" इति।

एतत् श्रुत्वा गोपकुमारः नितरां सन्तुष्टः। सः स्वस्य परिचयम् अप्रकटयन्— "आं,

जानामि। यं गोपकुमारं दूरस्थः भवान् एव जानीयात्, तम् अहं कथं वा न जानीयाम्?'' इति पृष्टवान्।

अनन्तरं सः राजधानीपुरुषः गोपकुमारं स्वगृहं प्रति आहूतवान्। गोपकुमारः तेन सह गतवान्।

तस्य गृहे सत्कारशीलस्य रामेशस्य चित्रं भित्तौ स्थापितम् आसीत्। तत् दृष्ट्वा आश्चर्येण पृष्टवान् गोपकुमारः– ''एतत् कस्य चित्रम्? भवतः गृहे एतत् कथम् आगतम्?'' इति।

''अये, किं पृच्छन् अस्ति भवान्? आत्मानं वेङ्कटपुरीयं वदन् एतं सत्कारशीलं रामेशं न जानाति इति तु आश्चर्यकरम्! ये दर्पणवतः गोपकुमारस्य गृहम् आगच्छन्ति तेषां सत्कारं यथाशक्ति करोति रामेशः। एवम् अतिथिसत्कारविषये अद्वितीयं नाम एतस्य। एतस्य कीर्तिः महाराजेन अपि श्रुता। अतः महाराजः एतं सत्कृतवान्। अतिथिसत्कारकार्यं निरन्तरं यथा चलेत् तथा कर्तुं धनसाहाय्यं कुर्वन् अस्ति महाराजः। एवं स्थिते अपि अल्पम् अपि गर्वम् अप्राप्नुवन् यथापूर्वं सत्कारकार्यं कुर्वन् अस्ति रामेशः। अपूर्वं व्यक्तित्वं रामेशस्य'' इति उक्तवान् सः राजधानीस्थः।

एतत् श्रुतवतः गोपकुमारस्य मनःशान्तिः अपगता। सः तस्मिन् एव दिने स्वग्रामं प्रत्यागतवान्।

तेषु एव दिनेषु, पूर्वं दर्पणं दत्तवान् संन्यासी गोपकुमारस्य गृहम् आगतवान्। ''भोः,



कथमस्ति भवान्? किमर्थं भवतः मुखे व्यथाचिह्नं दृश्यते? 'दर्पणवान् गोपकुमारः' इति कीर्तिः सर्वत्र प्रसृता अस्ति खलु? एतावता अपि तृप्तिः नास्ति वा भवतः?" इति पृष्टवान् सः।

"श्रीमन्! मम व्यथायाः असन्तृप्तेः च कारणं किम् इति जानीयात् एव भवान्। कृपया एतं मायादर्पणं भवान् प्रतिनयतु" इति उक्त्वा गोपकुमारः दर्पणम् आनीय संन्यासिने दत्त्वा विनयेन नमस्कृतवान्।

वेतालः एवं कथां समाप्य अवदत्– "अये, राजन्! गोपकुमारस्य व्यवहारः विचित्रः खलु? तस्य कीर्तिः समग्रे देशे प्रसृता अस्ति। तथापि अतृप्तिः तस्य। एतत् किमर्थम्? किमर्थं वा सः मायादर्पणं संन्यासिने प्रत्यर्पितवान्? मायादर्पणतः का हानिः अनुभूता तेन? एतेषां प्रश्नानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "राजधानीस्थस्य जनस्य वचनस्य श्रवणात् गोपकुमारः एकं वास्तविकं विषयं ज्ञातवान्। ये गोपकुमारस्य गृहम् आगच्छन्ति ते सर्वे दर्पणस्य प्रभावस्य कारणतः आगच्छन्ति, न तु गोपकुमारस्य नामबलात् व्यक्तित्वबलात् वा। अन्यच्च सः दर्पणः संन्यासिनः अनुग्रहात् प्राप्तः, न तु स्वसामर्थ्येन गोपकुमारेण प्राप्तः। किन्तु रामेशस्य वार्ता अन्या एव। अतिथिसत्कारकारणतः तेन कीर्तिः प्राप्ता। एषा कीर्तिः तेन स्वप्रयत्नात् प्राप्ता। एवं गोपकुमार-रामेशयोः कीर्त्योः भेदः आसीत्। एतं भेदं राजधान्यां ज्ञात्वा गोपकुमारः– 'अहं कदापि रामेशसमानः भवितुं न अर्हामि' इति निश्चितवान्। अतः एव सः संन्यासिने दर्पणं प्रत्यर्पितवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# अन्धं शासनम्

करीमुनगरस्य समीपे पूर्वं षकूरः नाम कश्चन निर्धनः निवसति स्म। कस्य काचित् इच्छा आसीत् यत् महाराजस्य आस्थाने अल्पः उद्योगः प्राप्तव्यः इति। अतः सः राजधानीं गतवान्। किन्तु महता प्रयत्नेन अपि सः उद्योगं प्राप्तुं न शक्तवान्। तेन बहूनि आवेदनपत्राणि प्रेषितानि। किन्तु तानि सर्वाणि व्यर्थानि अभवन्।

अन्ते षकूरः एकम् उपायं चिन्तितवान्। सः लोहकारद्वारा एकां मुद्रां कारितवान्। अनन्तरं प्रधानन्यायास्थानस्य पुरतः उपविष्टवान्। न्यायालयं प्रति ये आवेदनपत्राणि नयन्ति तान् एषः वदति— 'एतां मुद्राम् अङ्कयित्वा आवेदनपत्रम् अन्तः नेतव्यम्, मुद्राङ्कनार्थम् एकम् आणकं दातव्यं च' इति। जनाः तु षकूरद्वारा मुद्राम् अङ्कयित्वा आवेदनपत्रम् अन्तः नयन्ति स्म। न्यायालये स्थिताः अधिकारिणः भावयन्ति स्म यत् महाराजेन एषा व्यवस्था कृता स्यात् इति। अतः ते विना वचनं तया मुद्रया युक्तं जनानाम् आवेदनपत्रं स्वीकुर्वन्ति स्म। कदाऽपि कोऽपि अधिकारी न चिन्तितवान् यत् एषा मुद्रा केन अङ्क्यते, किमर्थं वा अङ्क्यते इति।

एवम् अचिरात् एव षकूरः प्रभूतं धनं सम्पादितवान्। कदाचित् तस्य मनसि भीतिः उत्पन्ना यत् यदि मया क्रियमाणं महाराजः जानीयात् तर्हि मम शिरच्छेदः स्यात् इति। अतः सः अपरम् उपायं चिन्तितवान्।

अनन्तरदिनतः मुद्राङ्कनार्थं सः आणकद्वयं स्वीकर्तुम् आरब्धवान्। एवं प्राप्ते धने अर्धं भागं स्वयं स्थापयन् अवशिष्टं भागम् अन्यस्मिन् स्यूते सङ्गृह्णाति स्म सः।

एवं दश वर्षाणि अतीतानि। कदाचित्

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

उदरवेदनाकारणतः षकूरः न्यायालयस्य पुरतः स्थितं स्वस्य मुद्राङ्कनस्थानं गन्तु न शक्तवान्। अतः तस्मिन् दिने आगतेषु आवेदनपत्रेषु मुद्रा न दृश्यते स्म। "एतेषाम् उपरि मुद्रा नास्ति। अतः एतेषां पञ्जीकरणम् अशक्यम्" इति उक्तवन्तः लिपिकाराः। मुद्रायाः अङ्कयिता तत्र नास्ति इति उक्तवन्तः जनाः। तथापि लिपिकाराः आवेदनपत्राणां पञ्जीकरणं न कृतवन्तः। ज्येष्ठैः अधिकारिभिः एषा वार्ता ज्ञाता। 'का सा मुद्रा? केन अङ्क्यते?' इति विचारणा आरब्धा।

परिशीलनात् ज्ञातं यत् मुद्रायाम्— 'अन्धं शासनम्, अनुमन्यते सर्वम्, षकूरमुद्रा' इति अक्षराणि दृश्यन्ते स्म। एषा सर्वकारीया मुद्रा न इति ज्ञातम् अधिकारिभिः।

अधिकारिणः एतां वार्तां राजानं निवेदितवन्तः। 'षकूरम् अविलम्बेन आनयन्तु' इति आज्ञापितवान् राजा। भटाः षकूरम् आनीय राज्ञः पुरतः उपस्थापितवन्तः।

'एवं कदाचित् प्रवर्तेत एव' इति जानाति स्म षकूरः। अतः सः राज्ञः समीपं गमनसमये पृथक् स्थापितं धनस्यूतं स्वीकृत्य एव गतवान् आसीत्।

राजा षकूरं दृष्ट्वा कोपेन पृष्टवान्— "अये, कः भवान्? मुद्राङ्ककः भवान् एव वा? मुद्राङ्कनाधिकारः केन दत्तः भवते? कदा आरभ्य एवं कुर्वन् अस्ति?" इति।

षकूरः पूर्वं प्रवृत्तं समग्रं विस्तरेण निवेद्य— "प्रभो, प्रतिमुद्रं मया कश्चन भागः पृथक् स्थापितः आसीत्। तेन रूपेण ३० सहस्रं रूप्यकाणि सङ्गृहीतानि। एतानि स्वीकरोतु" इति उक्तवान्।

षकूरस्य परिस्थितिं चातुर्यं च सम्यक् अवगत्य राजा सन्तुष्टः सन् तं तस्मिन् एव उद्योगे नियोजितवान्। किन्तु मुद्रायां स्थितम् 'अन्धम्' इति शब्दम् अपसारितवान्। एषा षकूरमुद्रा अनन्तरं दीर्घकालं यावत् व्यवहारे आसीत्।



चन्दमामानुबन्धः-२२

# ज्ञानभाण्डागारम्

## सः कः स्यात्?

एथेन्स्नगरे पूर्वं कश्चन तत्त्वज्ञानी निवसति स्म। कदाचित् कश्चन युवकः तस्य समीपम् आगत्य– "श्रीमन्! मया श्रेष्ठेन भाषणकारेण भवितव्यम् इति मम इच्छा। मया बहुषु प्रदेशेषु सञ्चारः कृतः। बहवः नेतारः दृष्टाः। ते सर्वे मम मेधाशक्तिं प्रशंसितवन्तः सन्ति। इदानीं भाषणकला ज्ञातव्या इति इच्छा जाता अस्ति। तदर्थं भवतः समीपम् आगतः अस्मि" इत्येवं दश निमेषान् यावत् निरन्तरम् उक्त्वा अन्ते– "मां भवान् भाषणकलां पाठयति चेत् अहं भवता पृष्टं शुल्कं दास्यामि" इति कथनं समापितवान्।

"एवं वा? किन्तु भवता द्विगुणितं शुल्कं दातव्यं भविष्यति खलु?" इति उक्तवान् तत्त्वज्ञानी।

"द्विगुणितं शुल्कम्!" इति आश्चर्यं प्रकटितवान् तरुणः।

"आम्। असम्बद्धकथनं विना मौनं कथं स्थातव्यम् इति भवान् प्रथमं बोधनीयः मया। अनन्तरं भाषणकला बोध्यते। एवं कार्यद्वयस्य निमित्तं द्विगुणितं शुल्कं दातव्यं भवति" इति उक्तवान् सः तत्त्वज्ञानी।

वदन्तु, सः तत्त्वज्ञानी कः स्यात्? (उत्तरं ३६तमे पृष्ठे)

## भवन्तः जानन्ति वा?

१. कः पक्षी कस्यचित् देशस्य राष्ट्रियचिह्नम् अस्ति? स च देशः कः?
२. कश्चित् तद्देशवासी न आसीत्। तथापि १९४८ तमे वर्षे कस्यचित् देशस्य अध्यक्षपदवीम् अलङ्कर्तुं सः मेधावी आहूतः। सः मेधावी कः?
३. स च देशः कः?
४. किमर्थम् एवं जातम्?
५. 'श्रीलङ्का'शब्दस्य अर्थः कः?

(उत्तराणि ३६तमे पृष्ठे)

# अयोध्यानगरम्

'अयोध्या' इत्यस्य पदस्य अर्थः जेतुम् अशक्या नगरी इति। एतत् नगरं पूर्वं कोसलदेशस्य राजधानी आसीत्। एतत् सरयूनद्याः तटे अस्ति। सूर्यवंशीयाः राजानः कोसलदेशं परिपालयन्ति स्म।

सप्तसु पवित्रेषु नगरेषु अन्यतमम् अस्ति अयोध्यानगरम्। अयोध्या श्रीरामस्य जन्मभूमिः। अतः भारतीयाः एतत् नगरं पवित्रतमं भावयन्ति। श्रीरामजन्मस्थानं, यागभूमिं, पाकशालां च इदानीम् अपि अत्र द्रष्टुं शक्यम् इति अत्रत्याः जनाः वदन्ति।

कोसलस्य राजधान्याः अयोध्यायाः अपरं नाम साकेतपुरम् इति। किञ्चित्कालं यावत् श्रावस्तिः अपि कोसलस्य राजधानी आसीत्। ४-५ शतककाले अयोध्या गुप्तवंशीयानां राज्ञां द्वितीयराजधानी

## रसवार्ताः

### अल्पवयस्कः वैद्यः

न्यूयार्कनगरे पठन् 'बालमुरलीकृष्ण अम्बटि' नाम बालकः भारतीयः विद्यार्थी वैद्यविद्याम् अधीत्य प्रपञ्चे एव अत्यल्पवयस्कः वैद्यः इति ख्यातिं प्राप्नुवन् अस्ति। इतः पूर्वम् इटलीदेशीयः इस्रायेल् विद्यार्थी अष्टादशे वयसि वैद्यपदवीं प्राप्य ख्यातिं गतः आसीत्। बालमुरलीकृष्णः तु सप्तदशवर्षीयः।





### तिमिङ्गिलगानम्

तिमिङ्गिलविषये पञ्चविंशतिं वर्षाणि यावत् प्रचलितात् संशोधनात् केचन अपूर्वाः विषयाः प्राकाश्यं गताः सन्ति। सर्वे तिमिङ्गिलाः समानं स्वरं न उत्पादयन्ति। केषाञ्चित् तिमिङ्गिलानां ध्वनिः मानवानां ध्वनिम् अनुकरोति इति ज्ञायते। अतः तिमिङ्गिलाः गीतद्वारा भावं प्रकाशयन्ति इति तर्क्यते।




आसीत्। कालप्रभावतः अनन्तरदिनेषु अयोध्यायाः राजधानीप्रामुख्यं नष्टम् अभवत्। किन्तु मथुरा इव अयोध्या अपि सहस्रशः वर्षेभ्यः भारतीयानां जनानाम् आदरपात्रम् अस्ति, श्रद्धाकेन्द्रम् अस्ति।

कस्मिंश्चित् कालखण्डे बौद्धजैनादीनि मतानि अपि अयोध्यायां प्रमुखतया विराजमानानि आसन्। चतुर्विंशतिः तीर्थङ्कराः प्रसिद्धाः खलु? तेषु त्रयोविंशतिः तीर्थङ्कराः इक्ष्वाकुवंशीयाः एव। तेषु सुप्रसिद्धाः आदिनाथः, अजितनाथः, अविनन्दनाथः, अनन्तनाथः, सुमतिनाथः इत्येते पञ्च तीर्थङ्कराः आयोध्यायाम् जन्म प्राप्तवन्तः आसन्।

एषु दिनेषु अयोध्यानगरम् उत्तरप्रदेशराज्ये लख्नो-गोरखपुर-रेल्वे-स्थानकयोः मध्ये तिष्ठति। प्राचीने काले अयोध्यायाः विषये यः पावित्र्यभावः आसीत् स एव भावः अक्षीणतया जागर्ति इदानीम् अपि।

सीतारामयोः देवालयाः अत्र सन्ति। तथैव श्रीरामपुत्रेण कुशेन निर्मितं नागेश्वरमन्दिरम् अपि अत्र अस्ति। हनुमान्घढ्प्रदेशे स्थितः हनूमतः देवालयः अपि अत्र प्रसिद्धः अस्ति।

अयोध्यातः २५ कि.मी. दूरे नन्दिग्रामः अस्ति। रामः यदा सीतालक्ष्मणाभ्यां सह अरण्यं गतः तदा भरतः एतस्मिन् ग्रामे एव तिष्ठन् चतुर्दश वर्षाणि यावत् राज्यपालनं कृतवान् इति श्रूयते।

# सम्पादयेम वयं
# साहित्यज्ञानसम्पदम्

१. सः इटलीदेशीयः महाकविः कः, यं च मृतं मन्यमानाः बान्धवाः शवस्थाने स्थापयितुं नीतवन्तः आसन्, योऽयम् अनन्तरकाले ३० वर्षाणि यावत् जीवितवान्?

२. यस्मिन् दिने षेक्स्पीयर् मृतः तस्मिन् एव दिने मृतः श्रेष्ठः कृतिकारः कः?

३. धृतराष्ट्र-गान्धार्योः पुत्री आसीत् वा?

४. का मुनिपुत्री वेदमन्त्रान् रचितवती?

५. 'शतक'शब्दस्य अर्थः कः?

## उत्तराणि

### सः कः स्यात्?

साक्रेटीस्वर्यः।

### सामान्यज्ञानम्

१. गरुडः। एषः इण्डोनेषियादेशस्य राष्ट्रियं चिह्नम्।
२. आल्बर्ट् ऐन्स्टीन्।
३. इस्रेल्।
४. यतः यहूदीयानां राज्यम् इस्रेल् तदा एव रूपितम् आसीत्। ऐन्स्टिन् च यहूदीयः।
५. प्रकाशमयी भूमिः इति।

### साहित्यज्ञानम्

१. पेट्रार्क्। (१३०४-१३७४)

२. 'डान्क्विक्सोट्'ग्रन्थस्य रचयिता सर्वेण्टीस्।

३. आम्, तस्याः नाम दुश्शला इति।

४. गर्गमुनेः पुत्री गार्गी।

५. समानविषयकाणि शतं पद्यानि अत्र भवन्ति इत्यर्थः।



# श्रीरामकृष्ण-परमहंसः (३)

कालिकादेव्याः आलये अर्चकत्वेन नियुक्तः गदाधरः कदाचित् पूजायाम् एव लीनः भवति। कदाचित् स्वस्य विग्रहस्य च मध्ये स्थितं भेदं विस्मृत्य पुष्पाणि स्वस्य शिरसि एव स्थापयति।

कदाचित् गदाधरः मध्यरात्रसमये वृक्षस्य अधः उपविश्य ध्यानं कुर्वन् समाधौ लीनः भवति। मन्दिरे कार्यं कुर्वन्तः अन्ये जनाः गदाधरस्य एतादृशं व्यवहारं दृष्ट्वा चकिताः भवन्ति।





ते कर्मकराः रास्मोनीदेव्याः जामातरं मथुरानाथं दृष्ट्वा गदाधरस्य विचित्रं व्यवहारं निवेदितवन्तः। "अहम् आगत्य स्वयं सर्वं परिशील्य यथोचितं करिष्यामि" इति उक्त्वा तान् प्रेषितवान् मथुरानाथः।



कदाचित् मथुरानाथः मन्दिरम् आगत्य अन्तः दृष्टिं प्रसारितवान्। तत्समये गदाधरः देव्याः पुरतः नैवेद्यं स्थापयित्वा नैवेद्यं स्वीकरणीयम् इति प्रार्थयन् देव्या नैवेद्यं खादयन् आसीत्। मथुरानाथः गदाधरस्य भक्तिपरवशतां स्वयं दृष्ट्वा आनन्दम् अनुभवन् ततः प्रतिनिवृत्तः।

कदाचित् देवालयम् आगता राज्ञी रास्मोनीदेवी गदाधरेण गीयमानानि गीतानि शृण्वती तत्रैव उपविष्टवती। न्यायास्थानं नीतः कश्चन व्यवहारः तत्समये तस्याः स्मृतिपथम् आगतः। एतत् जानन् गदाधरः राज्ञीं कपोले ताडयित्वा–"अत्रापि क्षुल्लकस्य प्रापञ्चिकविषयस्य चिन्तनं वा?" इति कोपेन पृष्टवान्।





गदाधरस्य एतं विचित्रं व्यवहारं दृष्ट्वा रास्मोनीदेव्याः परिचारकाः कोपेन गदाधरं ग्रहीतुम् आगतवन्तः। राज्ञी तान् निवारितवती। सा ज्ञातवती यत् अन्यस्य मनोभावस्य ज्ञानार्थं, मां सन्मार्गे प्रवर्तयितुं च अपेक्षिता शक्तिः गदाधरस्य अस्ति इति।

एतेषु दिनेषु गदाधरः विचित्रान् बहून् अनुभवान् प्राप्नोति स्म। कदाचित् तेन अनुभूतं यत् स्वशरीरात् निर्गतं भूतविशेषं शिवस्य त्रिशूलं तुम्फनेन अमारयत् इति। अनन्तरक्षणे एव सः भूतः अदृश्यतां गतः आसीत्। तदा गदाधरः निश्चितवान् 'मयि विद्यमानाः कल्मषाः अपगताः' इति।





गदाधरस्य माता निश्चितवती यत् पुत्रस्य विवाहः करणीयः इति। योग्यायाः वध्वाः अन्वेषणार्थं बन्धूनां प्रयत्नाः आरब्धाः। एतत् ज्ञात्वा गदाधरः उक्तवान्– "मम भाविनी पत्नी जयराम्बटिग्रामे रामचन्द्र-मुख्योपाध्यायस्य गृहे वर्धमाना अस्ति" इति।

जयराम्बटिग्रामः गदाधरेण इतः पूर्व कदापि न दृष्टः आसीत्। तथापि तेन एवम् उक्तम् आसीत्। गदाधरस्य वचनस्य अनुसारं बान्धवाः तं ग्रामं गतवन्तः। तत्र तैः रामचन्द्रमुख्योपाध्यायस्य गृहे योग्या वधूः दृष्टा। अनन्तरं विवाहमुहूर्तः निश्चितः।





एवं शारदामणि-गदाधरयोः विवाहः प्रवृत्तः। गदाधरः विवाहस्य सर्वेषु विधिषु उत्साहेन भागं गृहीतवान्। वध्वाः शारदामण्याः सौन्दर्येण, निर्मलदृष्ट्या, मधुरव्यवहारेण च सर्वे आकृष्टाः अभवन्।

विवाहानन्तरम् आलयम् आगतः गदाधरः पुनरपि तीव्रायाम् आध्यात्मिकसाधनायां मग्नः जातः। भक्तिपरः सः सम्पूर्णम् आनन्दं दातुम् अर्हम् आञ्जनेयं निरन्तरं ध्यायति।





कदाचित् गदाधरेण कश्चन अनुभवः प्राप्तः यत् काचित् सुन्दरी देवतास्त्री समीपम् आगच्छन्ती अस्ति इति। अनन्तरक्षणे सः ज्ञातवान् यत् सा देवतास्त्री माता इति। सा मन्दं समीपम् आगत्य गदाधरे विलीना जाता। —(अनुवर्तते)




# पुण्यविक्रयणम्

शरणः नाम कश्चन निर्धनः पूर्वं कस्मिंश्चित् ग्रामे निवसति स्म। सः अन्येषां कृषिक्षेत्रेषु परिश्रमेण कार्यं कुर्वन् धनं सम्पाद्य उदरपोषणं करोति स्म। तस्य पत्नी गौरी अपि यथाशक्ति कार्यं कुर्वती कुटुम्बनिर्वहणे पत्युः साहाय्यम् आचरति स्म।

कदाचित् तस्मिन् प्रदेशे क्षामः आगतः। अतः कृषिकार्यं स्थगितम्। एतस्य कारणतः शरणः प्रतिदिनम् उद्योगं न प्राप्तोति। उद्योगाभावे गृहे उपवासः सहजः खलु? तदा गौरी पतिम् उक्तवती– "नगरं गत्वा कोऽपि उद्योगः लभ्येत वा इति पश्यतु" इति।

एतत् एव युक्तम् इति चिन्तितवान् शरणः। अनन्तरदिने एव सः नगरं प्रति प्रस्थितवान्। गौरी उषःकाले उत्थाय ऋणरूपेण आनीतात् पिष्टात् पञ्च रोटिकाः सज्जीकृतवती। एकां स्वनिमित्तं स्थापयित्वा चत्वारि पत्ये पाथेयरूपेण दत्तवती।

यदा शरणः गृहात् प्रस्थितः तदा प्रतिवेशी शिवानन्दः शरणस्य नगरगमनं जानन् उक्तवान्– "भोः, नगरं सुदूरे अस्ति। पादाभ्यां गतं चेत् बहूनि दिनानि यावत् प्रयाणं करणीयं भवेत्। भवान् मम अश्वं नयतु। नगरात् प्रत्यागत्य अश्वं प्रत्यर्पयतु। चिन्ता नास्ति" इति।

शरणः शिवानन्देन दत्तम् अश्वम् आरुह्य नगरं प्रति प्रस्थितवान्। मध्याह्ने तेन काचित् नदी प्राप्ता। शरणः अश्वात् अवतीर्य अश्वं चरणार्थं प्रेषितवान्। अनन्तरं हस्तौ पादौ मुखं च प्रक्षाल्य नद्याः तीरे स्थितायां शिलायाम् अपविश्य रोटिकां खादितुम् उद्युक्तः जातः।

तावता बुभुक्षया श्रान्तः कश्चन दुर्बलः शुनकः तस्य समीपम् आगच्छत्। पुच्छचालनार्थम् अपि तस्य शक्तिः न



आसीत्। एतत् दृष्टवतः शरणस्य हृदये करुणा उत्पन्ना। सः करुणया एकां रोटिकां शुनकस्य पुरतः क्षिप्तवान्। शुनकः वेगेन तां रोटिकां खादित्वा पुनः शरणस्य मुखं दैन्येन अपश्यत्। शुनकस्य दैन्ययुक्तं मुखं दृष्ट्वा खिन्नः शरणः अवशिष्टाः तिस्रः रोटिकाः अपि शुनकाय एव दत्तवान्। तिसृणां रोटिकानां खादनेन तृप्तः शुनकः ततः अगच्छत्।

तृप्तस्य शुनकस्य दर्शनेन शरणः अपि तृप्तः। अनन्तरं सः नद्याः जलम् एव पीत्वा अश्वम् आरुह्य नगरं गतवान्। सायङ्कालसमये तेन नगरं प्राप्तम्। सः कस्याञ्चित् धर्मशालायां स्थितवान्।

अनन्तरदिने सः उद्योगप्राप्त्यर्थं पञ्चषेषु स्थलेषु प्रयत्नं कृतवान्। किन्तु कुत्रापि उद्योगः न प्राप्तः। अग्रे किं करणीयम् इति अजानन् सः इतस्ततः सञ्चरन् आसीत्। तावता तेन एकत्र सम्मिलिताः जनाः दृष्टाः।

सः तस्य समूहस्य समीपं गत्वा – "अत्र किं प्रवर्तमानम् अस्ति?" इति पृष्टवान्। तदा तत्र उपस्थितः कश्चित् उक्तवान् – "कुबेरमिश्रः नाम कश्चन कोटीश्वरः धनं दत्त्वा पुण्यं क्रीणाति। अतः पुण्यं विक्रेतुम् एते जनाः सम्मिलिताः सन्ति" इति।

एतत् श्रुत्वा आश्चर्यचकितः शरणः विक्रयणार्थं स्वसमीपे पुण्यं किमपि स्यात् वा इति चिन्तनं कृतवान्। तदा सः स्मृतवान् यत् पूर्वं पित्रा स्वधनेन ग्रामे एकः कूपः खानितः आसीत् इति। अतः सः कोटीश्वरस्य पुरतः गत्वा स्थितवान्। कोटीश्वरः शरणं तीक्ष्णया दृष्ट्या पश्यन् पृष्टवान् – "भवान् कीदृशं पुण्यं विक्रेतुम् इच्छति? विवरणं वदतु तावत्" इति।

"मम पित्रा आत्मना सञ्चितं समग्रं धनं व्ययीकृत्य ग्रामे जनोपकारार्थं कूपः खानितः आसीत्" इति उक्तवान् शरणः। तदा कोटीश्वरः हसन् उक्तवान् – "तच्च पुण्यं भवतः पितुः अभवत्। भवान् तस्य पुत्रः चेदपि भवतः शरीरं भिन्नम् एव। अतः तादृशं विक्रेतुं न अर्हति भवान्। स्वेन कृतं किमपि पुण्यकार्यम् अस्ति चेत् वदतु" इति।

शरणः म्लानवदनः सन् क्षीणेन स्वरेण

उक्तवान्– "श्रीमन्! दैनन्दिनभोजनार्थम् एव कष्टम् अनुभवन् अहं कीदृशं वा पुण्यकार्यं कुर्याम्? मया कृतं पुण्यकार्यं किमपि नास्ति" इति।

कोटीश्वरः कुबेरमिश्रः क्षणकालस्य अनन्तरम् उक्तवान्– "पुण्यं विक्रेतुं मम पुरतः यः तिष्ठति तेन कीदृशं पुण्यं कृतम् इति ज्ञातुं मम समीपे काचित् विशिष्टा शक्तिः अस्ति। तद्बलात् अहं वदामि। भवान् नगरं प्रति आगमनमार्गे दुर्बलाय दीनाय शुनकाय चतस्रः रोटिकाः यच्छन् अपूर्वं पुण्यं सम्पादितवान् अस्ति। शुनकाय रोटिकां यच्छता भवता उपवासः कृतः। शुनकस्य तृप्त्या भवता तृप्तिः प्राप्ता। एतत् अपूर्वं कार्यम्। भवता दत्तासु चतसृषु एकस्याः रोटिकायाः दानात् प्राप्तं पुण्यम् अहं क्रेष्यामि। मम तावत् एव सामर्थ्यम्" इति।



एतत् श्रुत्वा आश्चर्यचकितः शरणः इतस्ततः पश्यति। कोटीश्वरः सेवकद्वारा आपणतः यावानलरोटिकाम् आनायितवान्। अनन्तरं शरणम् उक्तवान् च– "भोः, एकस्याः रोटिकायाः दानात् प्राप्तं पुण्यम् एतस्यां रोटिकायां सङ्क्रान्तं भवतु इति वदन् एतां स्पृशतु" इति।

शरणः तथैव कृतवान्। कुबेरमिश्रः तां रोटिकां तुलायाः एकस्मिन् पार्श्वे स्थापयित्वा अपरस्मिन् पार्श्वे स्वसमीपे स्थितं सुवर्णराशिं स्थापितवान्। तथापि पार्श्वद्वयं समानं न जातम्। अन्ते कोटीश्वरः हसन् स्वकण्ठे स्थितं रत्नहारम् अपि तुलायां स्थापितवान्। तदा पार्श्वद्वयं समानं जातम्।

एवम् एकस्याः रोटिकायाः दानात् प्राप्तं पुण्यं विक्रीय सुवर्णराशिं प्राप्तवान् शरणः। एवं प्राप्ते सुवर्णे अल्पं भागं दत्त्वा धान्यादिकं स्वीकृत्य सुवर्णराशिना सह अश्वम् आरुह्य ग्रामं प्रति प्रस्थितवान्। एवं गमनसमये मार्गे अश्वः प्रमादवशात् पङ्कमये गर्ते पतितः, उपरि आगन्तुम् अशक्तः सन् क्रमशः अधः अगच्छत् च।

तत्समये तेन मार्गेण कश्चन संन्यासी आगतः। सः पङ्कस्य मध्ये पतितस्य अश्वस्य उपरि उपविष्टं शरणं दृष्ट्वा उच्चैः

उक्तवान्– "भोः, वृथा प्राणैः वियुक्तः मा भवतु। एतत् शापग्रस्तं स्थलम्। स्वेन कृतं पुण्यं किमपि अस्ति चेत् तत् एतस्मै गर्ताय अर्पयतु। तदा भवान् अश्वः च अपायात् मुक्तौ भविष्यतः" इति।

एतत् श्रुत्वा शरणः उच्चैः– "एवं तर्हि एकस्याः रोटिकायाः दानात् प्राप्तं पुण्यम् अर्पितवान् अस्मि" इति उक्तवान्।

तदा अश्वः किञ्चित् उपरि आगतः। अनन्तरं शरणः द्वितीयरोटिकादानात् प्राप्तं पुण्यं गर्ताय अर्पितवान्। अश्वः पुनः अपि किञ्चित् उपरि आगतः। शरणः तृतीयरोटिकादानात् प्राप्तं पुण्यम् अपि अर्पितवान्। एवं कृते अपि अश्वस्य जानुपर्यन्तः भागः गर्ते एव आसीत्।

एतत् पश्यन् स्थितः संन्यासी– "भवतः समीपे अन्यत् किमपि पुण्यं नास्ति वा?" इति पृष्टवान्।

"कुतो न? अस्ति एव" इति वदन् शरणः अश्वस्य उपरि स्थितं धनग्रन्थिं पङ्कमये गर्ते पातितवान्।

अपरस्मिन् क्षणे संन्यासी अदृश्यतां गतः। पङ्कमयः गर्तः अपि अदृश्यतां गतः। शरणः एतत्सर्वम् आश्चर्येण पश्यति। तावता काचित् देवता प्रत्यक्षीभूय– "शरण! अहम् अस्मि धर्मदेवता। भवतः दयागुणः प्रशंसार्हः। स्वयं बुभुक्षितः सन् भवान् समग्रम् आहारं बुभुक्षिताय शुनकाय दत्तवान्। धनव्यामोहः अपि नास्ति भवतः। अतः एव भवान् निर्व्यामोहं धनग्रन्थिं गर्ते पातितवान्। इतःपरम् एवम् एव धनस्य मध्ये तिष्ठन् अपि निर्व्यामोहेण व्यवहरन् सुखेन जीवतु" इति आशीर्वादं कृत्वा अदृश्या अभवत्। तस्मिन् एव क्षणे धनग्रन्थिः अश्वस्य उपरि आगतः।

शरणः सन्तोषेण गृहं गतवान्। पत्नीं प्रवृत्तं समग्रं निवेदितवान् च। अनन्तरं कृषिक्षेत्राणि क्रीत्वा महता प्रमाणेन कृषिम् आरब्धवान् सः। ये निर्धनाः, असहायाः च भवन्ति तादृशानां साहाय्यं कुर्वन् सुखेन जीवितवान् शरणः।






अग्रजः मृतः इति भावयन् सुग्रीवः दुःखेन नितरां पीडितः सन्– 'सः शक्तिशाली राक्षसः यदि कदाचित् गुहातः बहिः आगच्छेत् तर्हि अपायः निश्चितः' इति चिन्तयित्वा महत्या शिलया गुहाद्वारं पिधाय आगतवान् आसीत्।

किन्तु गुहायां मृतः वाली न खलु? वाली राक्षसं मारयित्वा प्रत्यागच्छन् गुहाद्वारं शिलया पिहितं दृष्ट्वा महता क्रोधेन शिलाम् अपसार्य किष्किन्धानगरम् आगतवान्। पुरतः आगत्य स्थितम् अग्रजं विनयेन नमस्कृतवान् सुग्रीवः।

किन्तु वाली अनुजस्य भावम् अजानन् तं तीक्ष्णया दृष्ट्या पश्यन् कठोरैः वचनैः निन्दितवान्। सुग्रीवः शिरसि स्थितं किरीटम् अपनीय वालिनः पादयोः पुरतः स्थापयित्वा साष्टाङ्गं नमस्कृतवान्।

वालिनः तु शीतला प्रतिक्रिया। नमस्कृत्य उत्थाय उक्तवान् सुग्रीवः– "अग्रज! भवान् शत्रुं मारयित्वा प्रत्यागतः इति तु अस्माकं सौभाग्यम्। भवन्तं दृष्ट्वा सर्वे वानराः महान्तं सन्तोषम् अनुभवन्ति। तस्मिन् दिने अहं गुहाद्वारसमीपे स्थितवान् आसं खलु? चिरकालानन्तरम् आगतं रक्तप्रवाहं दृष्टवतः मम विवेकः शोकवशात् विपर्यस्तः जातः। 'राक्षसः पुनरपि अस्मान् यथा न पीडयेत् तथा करणीयम्' इति उद्देशेन अहं गुहाद्वारं शिलया पिधाय प्रत्यागतवान्। अहं तु सिंहासनारोहणं सर्वथा न इच्छामि। 'राज्यं क्षणकालम् अपि राजरहितं न भवेत्' इति वदन्तः

रामसुग्रीवमैत्री।



मन्त्रिप्रभृतयः मम पट्टाभिषेकं कृतवन्तः। किन्तु इदानीं भवान् एव उपस्थितः अस्ति। भवान् एव अस्माकं राजा। अहं तु यथापूर्वं युवराजः भविष्यामि। माम् अन्यथा मा भावयतु कृपया'' इति।

वाली तु कोपान्धः सन् अनुजस्य सुग्रीवस्य प्रार्थनां तृणीकृत्य अवाच्यैः शब्दैः तं बहुधा निन्दितवान्। वालिनम् उद्दिश्य किमपि वक्तुं कस्यापि धैर्यं न आसीत्। सुग्रीवः तु अवमानभारेण शिरः अवनमय्य तूष्णीं स्थितवान्।

''अहम्, एषः सुग्रीवः च मायाविराक्षसम् अनुसृत्य गतवन्तौ। मायावी अन्धकारमयीं गुहां प्रविष्टवान्। शत्रोः मारणं विना प्रतिगमनम् अनुचितम् इति निश्चित्य अहं एतं सुग्रीवं गुहाद्वारसमीपे स्थातुम् आदिश्य गुहां प्रविष्टवान्। गुहायां मायावी सुलभतया न लब्धः। तं सर्वत्र अन्विष्य विरोधम् आचरतः तदनुयायिनः मारयित्वा, मायाविनम् अपि यमसदनं सम्प्रेष्य अहं प्रतिनिवृत्तः। किन्तु गुहातः बहिः आगन्तुं मया मार्गः एव न प्राप्तः। द्वारसमीपे स्थित्वा अहं एतं सुग्रीवं बहुधा आहूतवान्। अन्ते मया ज्ञातं यत् एषः दुष्टः शिलया गुहाद्वारं पिधाय गतः इति। अहं तां शिलां पादाघातेन भित्त्वा बहिः आगतवान्। भ्रातृद्रोहिणम् एतं मम राज्यात् निष्कासयिष्यामि। अस्मत्कुलोत्पन्नः इति मारणात् मोचितः अस्ति एषः'' इति तत्र सम्मिलितान् उक्त्वा सुग्रीवं ततः प्रेषितवान्। सुग्रीवस्य पत्नीं रुमां स्वस्य पत्नीं कृतवान्। वालितः भीतः सुग्रीवः वालिप्रवेशानर्हे ऋष्यमूकपर्वते वसतिं कृतवान्।

हनूमान्, जाम्बवान्, मैन्दः, द्विविदः इति एते चत्वारः सुग्रीवस्य मन्त्रिणः आसन्। राज्यात् निष्कासितः सुग्रीवः कथमपि दिनानि यापयन् आसीत्।

ऋष्यमूकपर्वते स्थितः सुग्रीवः कदाचित् परितः पश्यन् आसीत्। तदा तेन पम्पासरोवरतीरे अरण्यप्रदेशे सञ्चरन्तौ द्वौ तेजस्विनौ दृष्टौ। तयोः दर्शनात् सुग्रीवः नितरां भीतः। तौ तु दृढकायौ धनुर्धारिणौ च। 'एतौ प्रायः वालिपक्षीयौ स्याताम्।

मतङ्गमुनेः शापस्य कारणतः वाली अत्र ऋष्यमूकपर्वतम् आगन्तुं न शक्नोति। मां मारयितुम् इच्छन् सः एतौ पुरुषौ प्रेषितवान् स्यात्। अन्यथा घोरे अरण्ये मानवानाम् उपस्थितिः सर्वथा असाध्या एव' इति आलोचितवान् सुग्रीवः अग्रे किं करणीयम् इति अजानन् पञ्जरस्थः सिंहः इव इतस्ततः भ्रमति। सुग्रीवस्य चिन्ताक्रान्तं मुखं दृष्ट्वा तस्य मन्त्रिणः अपि खिन्नाः।



हनूमान् अग्रे आगत्य पृष्टवान्– "प्रभो, कस्मात् अपि कारणात् भवान् भीतः इव भाति। वालिनः भयं तु अत्र नास्ति। एवं तर्हि भीतिः कुतः?" इति।

"तत्र पम्पासरोवरतीरे स्थितम् अरण्यप्रदेशं पश्यतु। तेन भवान् एव स्वयं भीतेः कारणं जानाति। तत्र दृढकायौ धनुर्धारिणौ तरुणौ सञ्चरन्तौ दृश्येते। मम संहारार्थं वाली तौ प्रेषितवान् स्यात् इति तर्कयामि अहम्। राजनीतिः कदा कथं भवति इति कोऽपि ज्ञातुं न शक्नोति खलु? राजानः शत्रोः नाशार्थं बहुधा उपायम् अन्विष्यन्ति। वाली तु तीक्ष्णमतिः। अतः तेन एतत् कृतं न स्यात् इति वक्तुं न शक्यते। वस्तुस्थितिः का इति ज्ञातव्यम् अस्माभिः। भवान् रहस्यरूपेण पम्पातीरं गत्वा तयोः परीक्षां करोतु। तयोः सम्भाषणं शृणोतु। तयोः व्यवहारं परिशीलयतु। तौ आयुधानि धृत्वा अरण्ये किमर्थं सञ्चरतः इत्यपि जानातु। यदि मम विषये तयोः द्वेषभावः स्यात् तर्हि उपायेन तं भावं परिवर्तयितुं प्रयत्नं करोतु। प्रथमं तत्र गत्वा परिस्थितिं परिशील्य यथोचितं निर्णयतु" इति सूचितवान् सुग्रीवः।

हनूमान् एतत् अङ्गीकृत्य रामलक्ष्मणयोः समीपं गतवान्। एवं गमनसमये सः वानररूपं परित्यज्य ब्रह्मचारिवेषं प्राप्तवान् आसीत्। सः तयोः समीपं गत्वा उक्तवान्– "आर्यौ, भवन्तौ राजर्षी इव, देवतारूपिणौ इव, व्रतधारिणौ इव दृश्येते। किन्तु भवतोः विशालौ भुजौ, बलसूचकौ हस्तौ इत्यादीन् दृष्ट्वा तर्कयामि यत् भवन्तौ राजकुलोत्पन्नौ स्याताम् इति। कौ भवन्तौ? केन कारणेन अत्र आगतवन्तौ?" इति।



रामः लक्ष्मणः च किमपि उत्तरम् अयच्छन्तौ मौनं स्थितवन्तौ।

तदा हनूमान् पुनः उक्तवान्– "सुग्रीवो नाम धर्मात्मा वानरराजः कश्चित् अस्ति। बलशाली तस्य अग्रजः क्षुल्लकेन कारणेन तं राज्यात् निष्कासितवान्। सुग्रीवः इदानीं कष्टम् अनुभवन् जीवति। हनूमान् नाम वानरः अहं तस्य सुग्रीवस्य मन्त्री अस्मि। 'वस्तुस्थितिं ज्ञात्वा आगच्छतु' इति आदिश्य सुग्रीवः मां प्रेषितवान् अस्ति। कामरूपी अहम् अपेक्षितं रूपम् इच्छामात्रेण प्राप्नोमि। यद्यपि अहं ब्रह्मचारिवेषेण आगतः, तथापि वस्तुस्थितिं दर्शनमात्रेण निवेदयन् अस्मि। यतः दर्शनमात्रेण भवतोः मम विश्वासः उत्पन्नः। तत्र दृश्यते खलु ऋष्यमूकपर्वतः, तस्मिन् सुग्रीवः निवसति। गुणग्राही सः भवतोः मैत्रीम् अभिलषति" इति।

एतत् वचनं श्रुतवतः रामस्य मुखं विकसितम् अभवत्। पूर्वं कबन्धः नाम राक्षसः उक्तवान् आसीत् यत् रावणेन नीतां सीतां प्रत्यानेतुं वानरराजस्य सुग्रीवस्य मैत्री प्राप्तव्या इति।

'तादृशः क्षणः इदानीम् उपस्थितः अस्ति' इति भावयन् रामः लक्ष्मणम् उक्तवान्– "सहोदर, 'निध्यञ्जनौषधीमूलं खनता साधितो निधिः' इतिवत् अस्माभिः द्रष्टुम् इष्टः सुग्रीवः स्वयम् अस्मत्समीपं मन्त्रिणं प्रेषितवान् अस्ति। एषः मन्त्री हनूमान् कार्यज्ञः सूक्ष्मग्राही च। कथनशैली एव एतस्य निष्कपटतां निर्मलचित्ततां च प्रदर्शयति। अतः एतेन सह निश्शङ्कं वार्तालापः कर्तुं शक्यते" इति।

तदा लक्ष्मणः हनूमन्तम् उक्तवान्– "आवां रामलक्ष्मणौ नाम सहोदरौ। सुग्रीवस्य गुणातिशयाः अस्माभिः श्रुताः। तम् अन्विष्यन्तौ एव आवाम् अत्र आगतवन्तौ। सुग्रीवस्य मैत्रीं प्राप्तुं आवां सिद्धौ एव" इति।

लक्ष्मणस्य वचनं श्रुत्वा हनूमान्– 'ययोः मैत्री सुग्रीवेण इष्टा तौ अपि सुग्रीवस्य मैत्रीम् इच्छतः। सर्वं दैवयोगात् सम्पन्नम् इति भाति। एतयोः कष्टं किमपि स्यात्। अतः एतौ प्रायः सुग्रीवस्य मैत्रीम् इच्छतः। एतयोः मैत्रीं

प्राप्य सुग्रीवः स्वराज्यं प्रतिप्राप्तुम् अर्हति' इति आलोच्य तौ पुनः पृष्टवान्– "याभ्यां भवद्भ्यां राज्यं शासनीयम् आसीत्, तौ भवन्तौ किमर्थम् एतत् घोरम् अरण्यम् आगतवन्तौ?" इति।

तदा रामस्य नेत्रसङ्केतानुसारं लक्ष्मणः उक्तवान्– "आवाम् अयोध्याधिपस्य दशरथस्य पुत्रौ। वस्तुतः तु एतेन रामेण सिंहासनम् अलङ्करणीयम् आसीत्। किन्तु एषः पितृवचनपरिपालनार्थम् अरण्यम् आगतः। अहम् अग्रजम् अनुसृतवान्। एतस्य पत्नी सीता अपि पतिम् अनुसृतवती। कश्चन मायावी राक्षसः आवयोः अनुपस्थितौ एतस्य पत्नीं सीताम् अपहृत्य नीतवान्। कबन्धः नाम राक्षसः सूचितवान् यत् सुग्रीवद्वारा सीतापहारकस्य राक्षसस्य वार्ता ज्ञायते इति। आश्रितरक्षकः एषः इदानीं सीतान्वेषणविषये सुग्रीवस्य साहाय्यम् इच्छति। सुग्रीवः यदि आवयोः मैत्रीम् अङ्गीकुर्यात् तर्हि आवां कृतज्ञौ स्याव" इति।

तदा हनूमान् उक्तवान्– "अस्माकं राजा सुग्रीवः अपि भवादृशानां साहाय्यम् इच्छति। यतः तदीयं राज्यं पत्नी च अग्रजेन वालिना वशीकृतम् अस्ति। अतः रामस्य सुग्रीवस्य च समानं दुःखम्। समानशीलव्यसनेषु सख्यं युज्यते। अतः आगच्छताम्, सुग्रीवसमीपं गच्छाम" इति।

अनन्तरं हनूमान् ब्रह्मचारिवेषं परित्यज्य



निजरूपं धृत्वा रामलक्ष्मणौ भुजयोः उपरि आरोप्य ऋष्यमूकपर्वतं गतवान्।

ऋष्यमूकपर्वते सुग्रीवः न दृश्यते स्म। भीतः सः मलयपर्वतं गत्वा निलीय स्थितवान् आसीत्। हनूमान् रामलक्ष्मणौ ऋष्यमूकपर्वते अवतार्य मलयपर्वतम् आगत्य सुग्रीवं दृष्ट्वा उक्तवान्– "तत्र स्थितौ रामलक्ष्मणनामकौ दशरथपुत्रौ। पितृवाक्यपरिपालनार्थं रामः अरण्यम् आगतः। अग्रजम् अनुसृत्य लक्ष्मणः, पतिम् अनुसृत्य तत्पत्नी सीता च आगतौ। सा सीता केनापि राक्षसेन अपहृता इति श्रूयते। अतः तौ भवतः मैत्रीम् इच्छतः। तयोः मैत्र्या अस्माकम् अपि लाभः स्यात् इति अहं भावयामि। अतः तयोः मैत्रीम्



अङ्गीकृत्य तौ सत्करोतु'' इति।

एतत् श्रुत्वा सन्तुष्टः सुग्रीवः रामलक्ष्मणयोः समीपम् आगत्य विनयेन नमस्कृत्य रामम् उक्तवान्– ''सुग्रीवस्य मुखात् भवतोः विषये मया सर्वं ज्ञातम्। राजपुत्रः भवान् वानरकुलोत्पन्नस्य मम मैत्रीम् इच्छति यत् तत् मम सौभाग्यम्। एषः मम हस्तः स्नेहार्थं प्रसारितः अस्ति। भवतः हस्तं मम हस्तस्य उपरि स्थापयतु। स्नेहधर्मं पालयिष्यावः आवाम्'' इति। अनन्तरं स्वस्य हस्तम् अग्रे प्रसारितवान्।

रामः सुग्रीवस्य हस्तं प्रीत्या गृहीत्वा तं दृढम् आलिङ्गितवान्। हनूमान् अरणिमथनं कृत्वा अग्निम् उत्पाद्य तयोः पुरतः स्थापितवान्। तौ अग्निं प्रदक्षिणीकृत्य अग्निसाक्षितया मैत्रीम् अङ्गीकृतवन्तौ।

''सुग्रीव! अद्य आरभ्य आवाम् आत्मीयौ स्नेहितौ। इतः परं परस्परयोः दुःखे सुखे च परस्परयोः सहभागः भविष्यति'' इति उक्तवान् रामः।

अनन्तरं सुग्रीवः वृक्षशाखां छित्त्वा भूमौ प्रसार्य रामम् उपवेश्य स्वयम् अपि उपविष्टवान्। हनूमान् चन्दनवृक्षशाखाः आनीय भूमौ प्रसार्य लक्ष्मणम् उपवेशितवान्।

अनन्तरं सुग्रीवः वालिविरोधः कथं जातः इति विस्तरेण निवेद्य रामं उक्तवान्– ''राम, वालितः अहं नितरां भीतः अस्मि। एतस्मात् भयात् मां रक्षितुं भवान् एव समर्थः, नान्यः'' इति।

सुग्रीवस्य वचनं श्रुत्वा रामः मन्दहासपूर्वकम् उक्तवान्– ''मित्र! उपकारः कृतः चेदेव मैत्र्याः साफल्यम्। भवतः पत्नीं राज्यं च स्वायत्तीकृतवन्तं वालिनम् अहं मारयिष्यामि। अतः इतःपरं वालिविषयिणी भीतिः किञ्चिदपि मास्तु भवतः'' इति।

एतत् श्रुत्वा नितरां सन्तुष्टः सुग्रीवः– ''राम! हस्तच्युतं राज्यं पत्नीं च भवतः अनुग्रहात् अहं यदि प्रतिप्राप्तुं शक्नुयां तर्हि आत्मानं धन्यं भावयेयम्। प्रत्युपकाररूपेण अहं सीताम् अन्विष्य आनेष्यामि। सा स्वर्गे, पाताले, अन्यत्र यत्र कुत्रापि वा भवतु, ताम्

अन्विष्य आनेष्यामि एव। हाँ, स्मृतम्। केभ्यश्चित् दिनेभ्यः पूर्वं केनचित् राक्षसेन आकाशमार्गेण नीयमाना काचित्, चतुर्भिः मन्त्रिभिः सह उपविश्य वार्तालापं कुर्वतः मम पुरतः, स्वस्य आभरणानां ग्रन्थिं पातयित्वा गतवती आसीत्। अहं भावयामि— सा एव सीता स्यात् इति। तया पातितानि आभरणानि मया सुरक्षितं स्थापितानि। तानि भवान् अभिज्ञातुं शक्नुयात्" इति उक्तवान्।

तदा रामः उत्कण्ठया उक्तवान्— "मित्र! तानि आभरणानि कुत्र? शीघ्रं तानि अत्र आनयतु" इति।

सुग्रीवः झटिति उत्थाय गत्वा गुहायां रक्षितम् आभरणग्रन्थिम् आनीय ग्रन्थिं शिथिलीकृत्य रामस्य पुरतः तानि आभरणानि प्रसारितवान्। "राम, पश्यतु तावत्" इति उक्तवान् च।

वस्त्रग्रन्थेः दर्शनमात्रेण एव रामः तत् अभिज्ञातवान् आसीत्। आभरणानां दर्शनेन तु निश्चितम् अभवत् यत् एतानि सीतायाः इति। तानि दृष्ट्वा— 'हा सीते!' इति वदन् अश्रूणि स्रावयन् रामः मूर्च्छां गतः। लक्ष्मणस्य नेत्राभ्याम् अपि अश्रूणि आगतानि।

किञ्चित्कालानन्तरं सचेतनतां प्राप्य रामः लक्ष्मणम् उक्तवान्— "लक्ष्मण! राक्षसेन नीयमाना सीता स्वस्य अभिज्ञानार्थम् एतानि आभरणानि पातितवती। एतानि पूर्वं यथा आसन् तथैव सन्ति इदानीम् अपि" इति।

तदा लक्ष्मणः गद्गदस्वरेण उक्तवान्— "अग्रज! अहम् एतत् केयूरम्, कर्णकुण्डलम्, अन्यानि आभरणानि वा अभिज्ञातुं न शक्नोमि। किन्तु नूपुरद्वयं तु निश्चयेन अभिजानामि। यतः पादवन्दनसमये तत् द्वयं सदा पश्यामि स्म अहम्। एतत् द्वयं तु पूर्वं यथा तथैव अस्ति इदानीम् अपि" इति।

रामः सुग्रीवं दैन्येन पश्यन् पृष्टवान्— "सुग्रीव! राक्षसेन सा कस्यां दिशि नीयमाना आसीत्?" इति।





# अदृश्यकारकं मूलम्

कस्मिंश्चित् ग्रामे पूर्वं कश्चन दुष्टः धनिकः निवसति स्म। महाकृपणः सः। गृहं प्रति याचकानाम् आगमनं दूरात् एव निवारयति स्म सः।

कदाचित् तस्मिन् प्रदेशे भीकरः क्षामः आगतः। एतादृशः क्षामः इतः पूर्वं केनापि न दृष्टः आसीत्। आहाराभावतः निर्धनाः बहुधाः पीडिताः आसन्। धनिकस्य गृहे धान्यसङ्ग्रहः प्रभूतम् अस्ति इति जनाः जानन्ति स्म। अतः ते धनिकसमीपं गत्वा साहाय्यं प्रार्थितवन्तः। किन्तु धनिकः तेषां प्रार्थनां निर्दयं तिरस्कृतवान्।

एतस्मिन् सन्दर्भे कश्चन युवकः अग्रे आगत्य जनान् उक्तवान् यत् अहं धनिकतः धान्यं दापयामि इति। अनन्तरं सः धनिकस्य गृहस्य समीपे स्थिते उद्याने कस्यचित् महावृक्षस्य अधः, निर्निमेषं उपरितनं भागं पश्यन् स्थितवान्।

आकण्ठं भोजनं कृत्वा धनिकः वातायनस्य पार्श्वे स्थित्वा बहिः पश्यन् आसीत्। सः एतं तरुणं दृष्टवान्। तरुणस्य व्यवहारे सन्देहं प्राप्य उच्चस्वरेण पृष्टवान् सः– "अये, कः तत्र? मम उद्याने किं कार्यं भवतः?" इति।

सः तरुणः तु धनिकस्य वचनम् अशृण्वन् इव स्थितवान्। धनिकस्य कोपः प्रवृद्धः। सः गृहात् बहिः आगत्य तं तरुणं पुनः पृष्टवान्– "अये, बधिरः वा भवान्? अहं पृच्छन् अस्मि – कः भवान्? किमर्थं भवान् अत्र स्थितः अस्ति?" इति।

"विशेषः कोऽपि नास्ति। एकं नीडम् अन्विष्यन् अस्मि। ह्यः अहम् अत्र उपविष्टम् अग्निपक्षिणं दूरात् दृष्टवान्। यदि तस्य नीडः अत्र स्यात् तर्हि भाग्यं फलितम् इत्येव वक्तव्यम्। यतः तस्मिन् नीडे अमूल्यं मूलं

"चीनादेशीया जानपदकथा"

किञ्चन भवति। अहो, तत्र पश्यतु! अग्निपक्षिणः नीडः दृश्यते तत्र!" इति आश्चर्येण उक्तवान् सः तरुणः।

"अमूल्यं मूलम्? कथं भवति तत्? किं प्रयोजनं तेन?" इति कुतूहलेन पृष्टवान् धनिकः।

"तत् मूलं सहस्रवर्षेषु एकवारं पुष्पितं भवति। अनन्तरसहस्रवर्षेषु तत्र फलं दृश्यते। तस्य मूलस्य अल्पे खण्डे अपि अपूर्वा शक्तिः भवति। तस्य मूलस्य भागं शिरसि यः स्थापयति सः अदृश्यतां गच्छति। तं कोऽपि द्रष्टुं न अर्हति। अतः तत् मूलम् अस्ति चेत् अदृश्यतां प्राप्य, यत् इच्छामः तत् कर्तुं शक्नुमः" इति उक्तवान् तरुणः।

तदा धनिकः तं तर्जयन् उक्तवान्– "अये वराक! इतः निर्गच्छतु तावत्" इति।

सः तरुणः परितः पश्यन् धनिकं पृष्टवान्– "अत्र तु कोऽपि न दृश्यते! कं तर्जयन् अस्ति भवान्?" इति।

धनिकः तु द्विगुणितेन कोपेन उक्तवान्– "कम् अन्यं वदामि, ऋते भवतः? एतत् उद्यानं मम। अत्र प्राप्यमाणम् तत् अदृश्यकारकं मूलं ममैव" इति।

"एवं वा? तत् अपूर्वं मूलम् अन्वेष्टुं समर्थः अहं तत् नाशयितुम् अपि शक्नोमि" इति वदन् सः युवकः वेगेन वृक्षम् आरोढुम् उद्युक्तः।

धनिकः उद्वेगेन उक्तवान्– "अये, तिष्ठतु तावत्। भवते पञ्चाशत् रजतनाणकानि दास्यामि। कृपया इतः गच्छतु" इति।



"एतादृशम् अपूर्वं मूलम् अल्पेन मूल्येन विक्रेतुं कथं शक्येत? अन्यच्च धनस्य आवश्यकता नास्ति मम। यदि भवान् पञ्चाशद्गोणीमितानि धान्यानि दद्यात् तर्हि अहम् इतः गच्छेयम्" इति उक्तवान् तरुणः।

अनन्योपायः धनिकः एतत् अङ्गीकृतवान्। पञ्चाशद्गोणीमितानि धान्यानि स्वीकृत्य ततः निर्गतवान् तरुणः। ग्रामे सर्वेभ्यः तानि धान्यानि विभज्य दत्तवान् सः।

धनिकः सेवकानां द्वारा वृक्षे स्थितं नीडम् अधः आनायितवान्। नीडं स्वीकृत्य पत्न्याः समीपं गत्वा गर्वेण पृष्टवान्– "अद्य मया किं कृतम् इति जानाति वा भवती?" इति।

"अहं कथं जानीयाम्? कस्यचित् सम्पत्तिं वशीकृतवान् स्यात् भवान्" इति उक्तवती धनिकपत्नी।

"मया कृतं कार्यं भवत्या कथं ज्ञायेत? अपूर्वं मूलं वशीकृतं मया। एतस्य साहाय्येन प्रभूतं धनं सम्पादयिष्यामि अहम्" इति उक्तवान् धनिकः।

नीडम् आश्चर्येण पश्यन्ती पृष्टवती धनिकस्य पत्नी– "एतत् एव वा भवता प्राप्तम् अमूल्यं वस्तु?" इति। नीडे अप्रयोजकानि मूलानि, तृणानि, शलाकाः च दृष्टानि तया।

"भवती किं जानाति? एतेषु एव तत् अपूर्वं मूलं निहितम् अस्ति। तस्य अन्वेषणं प्रयत्नेन करणीयम्" इति उक्तवान् धनिकः।

अनन्तरम् नीडस्थम् एकं लघुमूलं शिरसि स्थापयित्वा पत्नीं पृष्टवान्– "भवती मां



पश्यति वा?" इति। "भवन्तं सम्यक् पश्यामि अहम्" इति उक्तवती धनिकपत्नी। धनिकः नीडस्थम् अपरं मूलं शिरसि स्थापयित्वा– "भवती मां पश्यति वा?" इति पृष्टवान्। 'आम्, आम्' इति औदासीन्येन उक्तवती धनिकपत्नी। एवम् एव बहुकालं यावत् प्रवृत्तम्।

अन्ते धनिकस्य पीडनेन खिन्ना धनिकपत्नी असमाधानेन उक्तवती– "इदानीं भवान् न दृश्यते। निर्गच्छतु इतः" इति।

एतत् श्रुत्वा धनिकः चिन्तितवान् यत् अदृश्यकारकं मूलं मया प्राप्तम् इति। स्वस्य भाग्यं बहुमन्यमानः धनिकः तत् मूलं शिरसि केशानां मध्ये गोपयित्वा ततः नगरं प्रति प्रस्थितवान्।

एकत्र कश्चित् सद्योनिर्मितानां खाद्यानां विक्रयणं कुर्वन् आसीत्। धनिकः तस्य समीपं गत्वा खाद्यद्वयं मौनं खादितवान्। अनन्तरं धनम् अदत्त्वा ततः गतवान्। आपणिकः चिन्तितवान् यत् परिचितः एषः धनिकः श्वः धनं दद्यात् इति।

'अहम् अदृश्यरूपेण गत्वा खादितवान् इत्यतः सः आपणिकः मां न दृष्टवान्। अतः एव सः धनं न पृष्टवान्' इति चिन्तितवान् धनिकः। तस्य धैर्यं प्रवृद्धम्।

तस्मिन् एव मार्गे कश्चन अपरः वणिक् आपणं पिधातुम् इच्छन् वाणिज्येन प्राप्तं धनं गणयन् आसीत्। धनं दृष्टवतः धनिकस्य मनसि तृष्णा उत्पन्ना। सः झटिति अग्रे गत्वा आपणिकस्य हस्ते स्थितानि नाणकानि बलात् स्वीकृतवान्। 'अदृश्यरूपेण स्थितं मां कोऽपि द्रष्टुं न शक्नोति' इति धनिकस्य विश्वासः।

आपणिकः चौर्यं कुर्वतः धनिकस्य हस्तं दृढं गृहीत्वा– "चोरः! चोरः! गृह्णन्तु" इति उच्चैः आक्रोशनं कृतवान्। एतत् श्रुत्वा प्रतिवेशिनः आपणिकाः आगत्य धनिकं सम्यक् ताडितवन्तः। एतेन नितरां श्रान्तः व्रणितः च वणिक् महता कष्टेन गृहं प्राप्तवान्।





# नेत्रदर्शी

वरदपुरनामकं ग्रामं कश्चन नूतनः वैद्यः आगतवान्। तस्य नाम नेत्रदर्शी इति। तस्य आकारः, वेषः, वचनशैली इत्यादयः सर्वे आकर्षकाः आसन्। सः ग्रामजनान् उक्तवान्– "अहं हिमालये दीर्घकालं यावत् आसम्। तत्र सिद्धपुरुषस्य अनुग्रहेण नूतनं चिकित्साक्रमं ज्ञातवान् अस्मि। अहं चिकित्सार्थं कस्यापि रोगिणः शरीरस्य परीक्षां न करोमि। किञ्चित्कालं रोगिणः नेत्रे तीक्ष्णया दृष्ट्या पश्यामि। एतावता एव रोगस्य कारणं ज्ञातुं शक्नोमि। अनन्तरं योग्यम् औषधं ददामि अहम्" इति।

एततं श्रुत्वा आकृष्टाः बहवः चिकित्सार्थं नेत्रदर्शिनः समीपम् आगतवन्तः। केषाञ्चित् रोगिणां रोगः अपगतः। अतः अल्पे एव काले समीपस्थेषु ग्रामेषु नेत्रदर्शिनः कीर्तिः प्रसृता। सर्वे नेत्रदर्शिनं श्रेष्ठं वैद्यं भावयन्तः तस्य प्रशंसां कुर्वन्ति।

तस्मिन् ग्रामे बहोः कालतः सत्यव्रतः नाम वैद्यः निवसति स्म। तस्य पितृ-पितामहादयः अपि वैद्याः आसन्। अतः सः बाल्ये एव बहून् सूक्ष्मान् चिकित्सांशान् ज्ञातवान् आसीत्। नेत्रदर्शिनः आगमनस्य कारणतः सत्यव्रतसमीपम् आगच्छतां जनानां सङ्ख्यायां ह्रासता दृष्टा।

बहुधा शरीरस्य परीक्षणेन, बहुविधैः प्रश्नैः च सत्यव्रतः रोगस्य कारणं जानाति स्म। 'महत्या जागरूकतया परीक्षा कृता चेदपि कदाचित् दोषः आचर्यते। एवं स्थिते अयं नूतनः वैद्यः नेत्रदर्शी नेत्रे दृष्ट्वा कथं वा चिकित्सां करोति? एतत् कदापि शक्यं वा? अत्र काऽपि वञ्चना न स्यात् वा?' इति आलोचयति सत्यव्रतः।

सत्यव्रतः स्वस्य सन्देहं ग्रामप्रमुखान्



द्वित्रान् उक्तवान्। ते नेत्रदर्शिनः समीपं गत्वा एतं विषयं साक्षात् पृष्टवन्तः।

तदा नेत्रदर्शी तान् उक्तवान्– "एते ग्रामीणाः वैद्याः कूपमण्डूकाः इव। ग्रामात् बहिः तैः न गम्यते। प्राचीनान् कांश्चन श्लोकान् कण्ठस्थीकृत्य चिकित्सां कुर्वन्तः आत्मना ज्ञातम् एव समग्रं मन्यन्ते। अहं तु एतादृशः न। बाल्ये एव गृहात् प्रस्थाय सुदूरे स्थितं हिमालयपर्वतं गतवान्। तत्र दीर्घकालं यावत् सिद्धपुरुषाणां सेवां कृतवान्। तेषाम् अनुग्रहेतः नूतनं चिकित्साक्रमं ज्ञातवान्। मया यत् ज्ञातं तत् जनानाम् उपकारकं स्यात् इति भावयामि अहम्। योग्यं शिष्यम् अन्विष्य मया प्राप्तां विद्यां पाठयितुम् अपि इच्छामि" इति।

कानिचन दिनानि अतीतानि। नेत्रदर्शिनः विषये सत्यव्रते यः सन्देहः आसीत् सः तु दिने दिने वर्धते। 'नेत्रदर्शिनः प्रामाणिकतायाः, शास्त्रज्ञानस्य च परीक्षार्थं कोऽपि उपायः आश्रयणीयः' इति चिन्तितवान् च।

एकस्मिन् दिने रात्रिसमये सत्यव्रतः स्ववेषं परिवर्तितवान्। केनचित् वृद्धेन सह नेत्रदर्शिनः गृहं गतवान्। द्वारशब्दं कृतवान् च। नेत्रदर्शी उत्थाय आगत्य द्वारम् उद्घाटितवान्।

सत्यव्रतः नेत्रदर्शिनं निवेदितवान्– "महानुभाव! एषः वृद्धः मम पितृव्यः। वार्धक्ये अपि एषः स्वस्थः आसीत्। स्वकीयानि सर्वाणि कार्याणि स्वयं करोति स्म। किन्तु न जाने, सप्ताहतः किम् अभवत् इति, किञ्चिदपि न खादति सः। जलम् अपि न पिबति। वयं बलात् क्षीरं पायितवन्तः। किन्तु तस्य वमनम् अभवत्। एषः इदानीं न सञ्चरति, न वा सम्भाषणं करोति। अतः भवान् एतं सम्यक् परीक्ष्य योग्यां चिकित्सां करोतु। एतदर्थं व्ययः यावत् वा भवतु नाम, तावत् दातुं सिद्धः अस्मि अहम्" इति।

सर्वं श्रुत्वा नेत्रदर्शी मन्दहासपूर्वकम् उक्तवान्– "मम समीपम् आगच्छतः रोगिणः परिस्थितिविषये अहं किमपि न पृच्छामि। पितृव्येण सह आगतः भवान् वृथा सर्वं निवेदितवान्। अहं तु नेत्रदर्शी

चिकित्सकः। नेत्रदर्शनमात्रेण सर्वं ज्ञातुं शक्नोमि अहम्। हिमालये महत् कष्टम् अनुभूय चिरकालिकसेवया एषः चिकित्साक्रमः ज्ञातः। एतं मञ्चस्य उपरि शाययतु तावत्" इति।

सत्यव्रतः वृद्धं मञ्चस्य उपरि शायितवान्। नेत्रदर्शी क्षणकालं वृद्धस्य नेत्रे तीक्ष्णया दृष्ट्या दृष्ट्वा उक्तवान्– "भवतः पितृव्यस्य जठरकोषः दुर्बलः जातः अस्ति। मस्तिष्के नाड्यः अपि कार्यं न कुर्वन्ति। अतः सः न किमपि खादति, पिबति वा। किमपि न वदति यत् तस्यापि कारणम् एतत् एव। मम औषधानि सामान्यैः मूलैः न निर्मीयन्ते। अपि तु तानि हिमालये केवलं लभ्यमानैः मूलैः निर्मीयन्ते। अतः भवतः पितृव्यः शीघ्रम् एव स्वस्थः भविष्यति, यथापूर्वं व्यवहरिष्यति च" इति।

एतत् सर्वं श्रुत्वा सः वृद्धः उत्थाय उपविशन् उक्तवान्– "इदानीम् अहं वक्तुं शक्नोमि। अपूर्वः चिकित्साक्रमः भवतः। अहं जन्मना अन्धः। मम नेत्रयोः दर्शनेन भवान् किं ज्ञातवान् स्यात् इति तु न ज्ञायते। अहम् अन्धः इति ज्ञातुम् अपि अशक्तः भवान् कीदृशः वैद्यः? अहो श्रेष्ठता भवतः!" इति।

एतानि वचनानि श्रुत्वा नेत्रदर्शी भीतः। तदा सत्यव्रतः उक्तवान्– "अहम् एतस्य ग्रामस्य वैद्यः। मम नाम सत्यव्रतः इति। एतत् तु सौभाग्यं यत् भवतः विचित्रस्य चिकित्साक्रमस्य कारणतः कोऽपि मृतः न जातः इति। चिकित्सार्थम् आगताः स्वक्लेशविषये किमपि वदन्ति एव। तत् श्रुत्वा भवान् किमपि औषधं यच्छति स्म। नेत्रदर्शनात् सर्वं ज्ञातम् इति वदति स्म। इतः परं वा प्रामाणिकतया जीवनं कर्तुं प्रयत्नं करोतु। वञ्चनायुक्तं चिकित्साक्रमं परित्यजतु। जनैः भवतः वञ्चना ज्ञाता चेत् प्राणापायः भवेत्" इति।

नेत्रदर्शी लज्जाम् अनुभवन् सत्यव्रतं क्षमां प्रार्थितवान्। अनन्तरदिने एव तं ग्रामं परित्यज्य पलायितवान् च।





# अतिविनयः

सरसपुरदेशस्य राजा सर्वोत्तमः। कदाचित् तस्य मनसि सन्देहः आगतः यत् मम आस्थाने एव कोऽपि शत्रुः अस्ति इति। यतः राजास्थाने चिन्तिताः बहवः विषयाः शत्रुराजेन जीवेश्वरेण ज्ञायन्ते स्म। एतत् तु नितराम् अपायकरं खलु? जीवेश्वरस्य सामर्थ्यं तावत् अधिकं नास्ति। तथापि छिद्रान्वेषी सः शत्रुराजः कदाचित् अवकाशं प्राप्य आक्रमणं न कुर्यात् इति वक्तुं न शक्यते खलु?

आस्थाने स्थितेषु उद्योगिषु शत्रुदेशीयः गूढचरः कः स्यात् इति बहुधा अन्विष्टवान् राजा। किन्तु तस्य प्रयत्नः सफलः न जातः। सर्वे अपि उद्योगिनः राजानं देशं च विशेषगौरवेण पश्यन्ति स्म। शत्रुदेशीयस्य गूढचरस्य अन्वेषणार्थं राजा स्वयं गूढचरान् अपि नियोजितवान्। तथापि कस्यापि व्यवहारे देशद्रोहिता न दृष्टा।

सर्वोत्तमस्य आस्थाने चन्द्रहासः नाम कश्चन विदूषकः आसीत्। सः तीक्ष्णमतिः उपायचतुरः च। राजा तं स्वसमीपम् आहूय स्वस्य सन्देहं, सन्देहनिवारणार्थं कृतं प्रयत्नं च विस्तरेण निवेद्य उक्तवान्– "चन्द्रहास! केनापि उपायेन सः कपटः उद्योगी अन्वेष्टव्यः भवता। एतस्मिन् कार्ये भवान् एव समर्थः, नान्यः इति मम मतिः" इति।

तदा चन्द्रहासः– "प्रभो, यथा भवता चिन्त्यते तथा आस्थाने देशद्रोही यदि स्यात् तर्हि तं क्षणमात्रेण अभिज्ञास्यामि अहम्" इति उक्त्वा सर्वान् उद्योगिनः अत्र मेलयतु इति राजानं सूचितवान्। राजा तथैव कृतवान्।

यदा सर्वे सम्मिलिताः तदा चन्द्रहासः तान् उद्दिश्य उक्तवान्– "देशस्य परिपालकस्य प्रतिदिनं कीदृश्यः समस्याः भवन्ति इति

भवन्तः जानन्ति एव। बहवीनां समस्यानां निवारणे सः व्यग्रः भवति। अतः सः विरलतया एव अल्पकालिकं विरामं प्राप्नोति। तं परितः विद्यमानाः उद्योगिनः यदि विश्वासार्हाः राजनिष्ठाः च स्युः तर्हि सः प्राप्तम् अल्पं विरामं निश्चिन्ततया यापयेत्। अन्यथा सदा व्यग्रता अनिवार्या। अस्माकं राज्ञः सौभाग्यं यत् प्रामाणिकाः समर्थाः,विश्वासार्हाः भवन्तः तस्य आस्थाने उद्योगिनः सन्ति इति। इदानीं भवद्भिः स्वविश्वासार्हता प्रदर्शनीया। अतः भवत्सु एकैकः अपि अग्रे आगत्य राजानं पादयोः नमस्कृत्य दशवारं प्रदक्षिणनमस्कारान् कुर्यात्" इति।



एतत् श्रुत्वा उभौ राजोद्योगिनौ झटिति अग्रे आगत्य चन्द्रहासेन यथा उक्तं तथा कृत्वा पार्श्वे स्थितवन्तौ।

सर्वोत्तमराजः एतत्सर्वं गाम्भीर्येण कुतूहलेन च पश्यन् आसीत्।

चन्द्रहासः अन्यान् राजोद्योगिनः तीक्ष्णया दृष्ट्या पश्यन् कोपेन पृष्टवान्– "मया उक्तं न श्रुतं वा? किमर्थं मौनं स्थितवन्तः सन्ति भवन्तः?" इति।

तदा अपि ते सर्वे शिरः अवनमय्य मौनं स्थितवन्तः आसन्। चन्द्रहासः कठोरेण स्वरेण पुनरपि तथैव उक्तवान्। तदा अपि ते सर्वे मौनं स्थितवन्तः आसन्।

अन्ते चन्द्रहासः महता क्रोधेन– "कीदृशम् औद्धत्यं भवताम्? मया यथा उक्तं तथा न क्रियते चेत् कशाताडनेन दण्ड्यन्ते भवन्तः" इति उक्त्वा भटान् कशाम् आनेतुम् आज्ञापितवान्।

तदा चत्वारः उद्योगिनः मन्दं मन्दं पदं स्थापयित्वा अग्रे गत्वा राजानं पादयोः नमस्कृत्य प्रदक्षिणं कर्तुम् उद्युक्ताः जाताः।

तदा चन्द्रहासः– "अलं प्रदक्षिणेन" इति तान् उक्त्वा राजानं पश्यन्– "प्रभो प्रथमं यौ भवन्तं नमस्कृत्य प्रदक्षिणं कृतवन्तौ तौ एव शत्रुपक्षीयौ देशद्रोहिणौ" इति उक्त्वा कशाम् आनीतवन्तं भटं प्रतिप्रेषितवान्।

राजा आश्चर्येण– "एतौ देशद्रोहिणौ इत्यत्र किं प्रमाणम्? केन आधारेण भवता

एवं निर्णीतम्?" इति पृष्टवान्।

"प्रभो, ये कपटराजभक्तिं प्रदर्शयन्ति ते स्वस्य कपटतायाः गोपनार्थं सर्वदा प्रयत्नं कुर्वन्तः भवन्ति। राजभक्तेः प्रदर्शनार्थम् अल्पः अवकाशः प्राप्तः चेदपि ते तस्य सदुपयोगार्थम् उद्युक्ताः भवन्ति। अतः ते अयुक्ते समये स्थले च राजभक्तिं प्रदर्शयन्ति" इति उक्तवान् चन्द्रहासः।

"एवं तर्हि अन्येषां व्यवहारस्य विषये किं वदति भवान्?" इति पृष्टवान् राजा।

"ते वस्तुतः अपि राजभक्ताः। राजभक्तिः सर्वेषां पुरतः अल्पे अवकाशे प्राप्ते अपि प्रदर्शनीया इति ते कदापि न चिन्तयन्ति। अन्यच्च राजभक्तिप्रदर्शनस्य अपि किञ्चन औचित्यं भवति एव। दशवारं प्रदक्षिणनमस्काराः करणीयाः इति मया उक्तम्। स्वाभिमानी कोऽपि एतादृशं कार्यं कर्तुं नार्हति। प्रदक्षिणं देवस्य क्रियते, न तु जीवतः कस्यचित् पुरुषस्य। राजभक्तिः प्रदर्शनीया इति उद्देशेन अनुचितम् अपमानकरं वा कार्यं कोऽपि राजभक्तः न करोति। कपटाः तु स्वकापट्यगोपनार्थम् अतिविनयं प्रदर्शयन्तः अनौचित्यं न गणयन्ति। 'अतिविनयः धूर्तलक्षणम्' इति प्राचीनानाम् उक्तिं जानाति एव भवान्" इति उक्तवान् चन्द्रहासः।

विदूषकस्य वचने युक्तता दृश्यते इति चिन्तयन् राजा गूढचरनायकम् आहूय– "एतौ सम्यक् परीक्ष्य एतयोः मुखात् सत्यं वाचयतु" इति आदिष्टवान्।

गूढचरनायकः तौ अन्यं प्रकोष्ठं नीतवान्। "सत्यं न उक्तं चेत् भवतोः मरणदण्डनं भवेत्। सत्यज्ञानार्थं वयं चित्रहिंसाप्रयोगम् अपि करिष्यामः एव" इति वदन् सम्यक् तर्जयन् तयोः भीतिं जनितवान्। तदा भीतौ तौ स्वस्य जीवोत्तमगूढचरत्वम् अङ्गीकृतवन्तौ।

अनन्तरं राजा सर्वोत्तमः तौ गूढचरौ देशात् बहिष्कृतवान्। चन्द्रहासस्य बुद्धिमत्तां प्रशंसन् अमूल्येन उपायनेन तं सत्कृतवान् च।



# प्रकृतिवैचित्र्याणि –

मृगराजः सिंहः प्रतिघण्टं ४० मैल् वेगेन धावितुम् अर्हति। तथैव एकेन एव प्रयत्नेन ४० द्वादशाङ्गुलं यावत्




उल्लङ्घनं कर्तुम् अर्हति। अरण्यवासी सिंहः प्रतिसप्ताहं १०८ किलोमितं मांसं खादति।




शिलीन्ध्रः इव दृश्यमानं जलसस्यं किञ्चन वास्तविकतया न सस्यम्, अपि तु जन्तूनां कश्चन समूहः। अत्रत्येषु जन्तुषु 'प्लोट्' नामकः जन्तुः ८-१० अङ्गुलोन्नतः भवति। अत्र निवासतां सर्वेषां जन्तूनां कृते पृथक्तया एव आहारप्रापणव्यवस्था भवति।

१९२० तमे वर्षे न्यूयार्कस्थेन ब्रांक्स् प्राणिसङ्ग्रहालयेन १५,००० डालरात्मकः पुरस्कारः उद्घुष्टः अस्ति। किन्तु अद्यावधि तादृशः पुरस्कारः केनापि न प्राप्तः। यतः स च पुरस्कारः ३० द्वादशाङ्गुलेभ्यः अपि दीर्घतमं सर्पम् आनीतवते दीयते! न ज्ञायते, एषः पुरस्कारः केन प्राप्येत इति।



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां डिसम्बर्-९० मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अक्टोबर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'अगस्ट्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **एतस्मिन् वयसि पठनं समुचितम्।**

द्वितीयचित्रम् - **भारवहनं तु सर्वथा अनुचितम्।**

प्रेषकः - श्री सनत्कुमारोपाध्यायः, श्रीद्वारकाशारदामठः, द्वारका, जामनगरम्-३६१३३८




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अक्षीणः - Undiminishing
अङ्कः - Lap
अनुकरोति - Resembles
आवेदनपत्रम् - Form of application
उल्लङ्घनम् - Cross over
करण्डकः - A small box
कशा - Whip
क्षुल्लकम् - Worthless
खानितः - Dug
गर्तः - Pit
जानु - Knee
तिन्त्रिणी - Tamarind
तुम्फनम् - Goring
तुला - Weighing instrument
दम्भः - Outward show
निश्शङ्कम् - Without doubt
नीडः - Nest
पङ्कः - Mud
पञ्जीकरणम् - Registration
पाथेयम् - Food packed for journey
पिष्टम् - Flour
प्रस्थः - A corn measure
बधिरः - Deaf
मरीचिका - Chilli
मस्तिष्कम् - Brain
मातुलः - Maternal uncle
मुद्रा - Seal
मूलम् - Root
यथोचितम् - Appropriate
यावानलः - Jowar
रोटिका - A kind of bread
लोहकारः - Blacksmith
वमनम् - Vomiting
वातायनम् - Window
विपरीतः - Opposite
वृद्धिः - Increase
शर्करा - Sugar
शिथिलीकृत्य - Having loosened
सद्योनिर्मितम् - Just prepared
सीविता - Stitched

* * * * *

# Ta dum, They is here

**Oops!
Kiddy grammar
sure is catchy—Ya,
they are here.**

Bow Wow 'n' Floppy the doggies (wuff! wuff!), Jumbo the elephant, Wobbit the rabbit, Teddy 'n' Sporty your bear buddies, the mouse of your house—Squeeks, not to mention Flipper the dolphin 'n' Bunny with the Twins. They are all part of the CUDDLES family. And hang on—there's more to come.



What stuffing to use, what shape to give, which colour to use...... We've spent long months in designing and crafting the toys which can take on the toughest torture test ever—childhandling. To ensure that they're safe.

The one thing we didn't do while making our toys was fool around. We left that entirely for your kid to do. Come, check us out.

**CUDDLES**

CHANDAMAMA TOYTRONIX

In collaboration with Sammo Corporation, S Korea

Chandamama Buildings, 188, NSK Salai,
Vadapalani, Madras-600 026.